उपयात्उपायात् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ वेशोरूपांतरप्रकाशनंकर्मयस्यसवैश्यः अरिष्टनेमिःअप्रतिहतचक्रोस्मीतिगूढोभिसंधिः कुरुपुंगवानांपांडवानांमध्येगोसंख्यःगोइतिइंद्रियवाचित्वात्पंचानांसंख्या गोसंख्यःपंचसंख्यःपंचमइत्यर्थः ॥ ५ ॥ तान्राजसिंहान्वर्त्तमानकालेराजमूर्धस्थान्नवेद्मिनोपलभे स्वर्गोध्वस्तइतिवद्विशेषणादर्शनाद्विशिष्टादर्शनमुक्तमित्यदोषः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ गोसंख्योगवां

वैशंपायनउवाच सहदेवोपिगोपानांकृत्वावेषमनुत्तमं॥ भाषांचैषांसमास्थायविराटमुपयादथ॥ १ ॥ गोष्ठमासाद्यतिष्ठंतंभवनस्यसमीपतः ॥ राजाथदृष्ट्वा
पुरुषान्प्राहिणोज्जातविस्मयः॥ २॥तमायांतमभिप्रेक्ष्यभ्राजमानंनरर्षभं॥ समुपस्थायवैराजापप्रच्छकुरुनंदनं॥३॥ कस्यवात्वंकुतोवात्वंकिंवात्वंतुचिकीर्ष
सि॥ नहिमेदृष्टपूर्वस्त्वंतत्त्वंब्रूहिनरर्षभ॥४॥संप्राप्यराजानममित्रतापनंततोब्रवीन्मेघमहौघनिःस्वनः. ॥ वैश्योस्मिनाम्नाहमरिष्टनेमिर्गोसंख्यआसंकुरुपुंगवा
नां॥५॥वस्तुंत्वयीच्छामिविशांवरिष्ठतान्राजसिंहान्नहिवेद्मिपार्थान् ॥ नशक्यतेजीवितुमप्यकर्मणानचत्वदन्योममरोचतेनृपः॥ ६ ॥ विराटउवाच त्वंब्रा
ह्मणोयदिवाक्षत्रियोसिसमुद्रनेमीश्वररूपवानसि ॥ आचक्ष्वमेतत्त्वममित्रकर्शननवैश्यकर्मत्वयिविद्यतेक्षमं॥ ७ ॥कस्यासिराज्ञोविषयादिहागतःकिंवापि
शिल्पंतवविद्यतेकृतं ॥ कथंत्वमस्मासुनिवत्स्यसेसदावदस्वकिंचापितवेहवेतनं॥ ८ ॥ सहदेवउवाच पंचानांपांडुपुत्राणांज्येष्ठोभ्रातायुधिष्ठिरः॥ तस्याष्ट
शतसाहस्रागवांवर्गाःशतंशतं ॥ ९ ॥ अपरेशतसाहस्राद्विस्तावंतस्तथापरे ॥ तेषांगोसंख्यआसंवैतंतिपालेतिमांविदुः ॥ १० ॥भूतंभव्यंभविष्यंचयच्चसंख्या
गतंगवां ॥ नमेऽस्त्यविदितंकिंचित्समंताद्दशयोजनं॥ ११॥गुणाःसुविदितात्यासन्ममतस्यमहात्मनः॥आसीच्चसमयादृष्टःकुरुराजोयुधिष्ठिरः॥ १२ ॥क्षिप्रंच
गावोबहुलाभवंतिनतासुरोगोभवतीहकश्चन॥ तैस्तैरुपायैर्विदितंममैतदेतानिशिल्पानिमयिस्थितानि ॥ १३ ॥ ऋषभांश्चापिजानामिराजन्पूजितलक्षणा
न् ॥ येषांमूत्रमुपाघ्रायअपिवंध्याप्रसूयते॥ १४ ॥ विराटउवाच शतंसहस्राणिसमाहितानिसवर्णवर्णस्यविमिश्रितान्गुणैः ॥ पशून्सपालान्भवतेददा
म्यहंत्वदाश्रयामेपशवोभवंत्विह ॥ १५॥ वैशंपायनउवाच तथासराज्ञोविदितोविशांपतेरुवासतत्रैवसुखंनरोत्तमः ॥ नचैनमन्येपिविदुःकथंचनप्रादा
च्चतस्मैभरणंयथेप्सितं ॥ १६ ॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिसहदेवप्रवेशेदशमोऽध्यायः ॥ १० ॥ . ॥ ७॥ ॥ ७॥

परीक्षकः तंतिपालःवचनकरः ॥ १० ॥ संख्यागतंपरीक्षायामवगतं ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ समानोवर्णोयेषांतेसवर्णाःवर्णस्यवर्णेनविमिश्रिताश्चपाटलादयः विभक्त्यलोपआर्षः सवर्णांश्चवर्ण विमिश्रिताश्चतान् तत्तद्गुणैःउपलक्षितान् ॥ १५ ॥ राज्ञोराज्यकर्त्तुःविशांपतेः प्रजापालकस्य भरणंवेतनं ॥ १६ ॥ इतिविराटपर्वणिनैलकंठीयेभारतभावदीपेदशमोऽध्यायः ॥ १० ॥ ॥७॥ ॥७॥

अदृश्यतदृष्टः रूपसंपदाउपलक्षितः प्राकारवप्रेस्थितैःतत्समीपेवास्थितोऽदृश्यतदृष्टः प्रतिमुच्यपरिधाय दीर्घेकुंडलेताटंके कंबूनांशंखानामुपरिकंबूपरिहाटकेकनकमयेवलयेचपरिमुच्य ॥ १ ॥ दीर्घान् मूर्धजान्बाहूचप्रविकीर्यप्रसार्य ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ परिहारकामःअमात्येषुराज्यभारंन्यस्तुकामः ॥ ७ ॥ देव्याउत्तरायाः ॥ ८॥येनहेतुनाइदंरूपंममजातंतत्कीर्त्तनंतवनिकटेव्यर्थंशोककरंचेत्यर्थः

वैशंपायनउवाच अथापरोदृश्यतरूपसंपदास्त्रीणामलंकारधरोबृहत्पुमान् ॥ प्राकारवप्रेप्रतिमुच्यकुंडलेदीर्घेचकंबूपरीहाटकेशुभे ॥ १ ॥ बाहूचदीर्घान्प्रविकीर्यमूर्धजान्महाभुजोवारणतुल्यविक्रमः ॥ गतेनभूमिंप्रतिकंपयंस्तदाविराटमासाद्यसभासमीपतः॥ २॥ तंप्रेक्ष्यराजोपगतंसभातलेव्याजात्प्रतिच्छन्नमरिप्रमाथिनं ॥ विराजमानंपरमेणवर्चसासुतंमहेंद्रस्यगजेंद्रविक्रमं ॥ ३॥ सर्वानपृच्छच्चसभानुचारिणःकुतोयमायातिपुरानमेश्रुतः ॥ नचैनमूचुर्विदितंतदानराःसविस्मयंवाक्यमिदंनृपोब्रवीत् ॥ ४॥ सत्वोपपन्नःपुरुषोमरोपमःश्यामोयुवावारणयूथपोपमः ॥ आमुच्यकंबूपरिहाटकेशुभेविमुच्यवेणीमपिनह्यकुंडले॥ ५॥ स्रग्वीसुकेशःपरिधायचान्यथाशुशोभधन्वीकवचीशरीयथा॥ आरुह्ययानंपरिधावतांभवान्सुतैःसमोमेभववामयासमः॥ ६॥ वृद्धोह्यहंवैपरिहारकामःसर्वान्मत्स्यांस्तरसापालयस्व॥ नैवंविधाःक्लीबरूपाभवंतिकथंचनेतिप्रतिभातिमेमनः॥ ७॥ अर्जुनउवाच गायामिनृत्याम्यथवादयामिभद्रोस्मिनृत्येकुशलोस्मिगीते ॥ त्वमुत्तरायैप्रदिशस्वमांस्वयंभवामिदेव्यानरदेवनर्तकः॥ ८॥ इदंतुरूपंममयेनकिंतवप्रकीर्तयित्वाभृशशोकवर्द्धनं॥ बृहन्नलांमांनरदेवविद्धिसुतंसुतांवापितृमातृवर्जितां ॥ ९ ॥ विराटउवाच ददामितेहंतवरंबृहन्नलेसुतांचमेनर्त्तययाश्चतादृशीः ॥ इदंतुतेकर्मसमंनमेमतंसमुद्रनेमिंपृथिवींत्वमर्हसि ॥ १० ॥ वैशंपायनउवाच बृहन्नलांतामभिवीक्ष्यमत्स्यराट्कलासुनृत्येषुतथैववादिते ॥ संमंत्र्यराजाविविधैःस्वमंत्रिभिःपरीक्ष्यचैनंप्रमदाभिराशुवै ॥ ११ ॥ अपुंस्त्वमप्यस्यनिशम्यचस्थिरंततःकुमारीपुरमुत्ससर्जतं ॥ सशिक्षयामासचगीतवादितंसुतांविराटस्यधनंजयःप्रभुः ॥ १२॥ सखीश्चतस्याःपरिचारिकास्तथाप्रियश्चतासांसबभूवपांडवः ॥ १३॥ तथाससत्रेणधनंजयोवसन्प्रियाणिकुर्वन्सहताभिरात्मवान्॥ तथाचतंतत्रनजज्ञिरेजनाबहिश्चरावाप्यथचांतरेचराः॥ १४॥ इतिश्रीमहाभारतेविराटपर्वणिपांडवप्रवेशपर्वणिअर्जुनप्रवेशोनामएकादशोऽध्यायः ॥ ११ ॥ ॥छ॥ ॥छ॥ ॥१०॥

॥ ९ ॥ तेसमंत्वदाकृत्यायुक्तंनइतिमेममतं ॥ १० ॥ ११ ॥ अपुंस्त्वंक्लीबत्वं निशम्यआलोच्य ॥ १२ ॥ १३ ॥ सत्रेणकैतवेन ॥ सत्रमाच्छादनेयज्ञेसदादानेचकैतवेइतिविश्वः नजज्ञिरेनज्ञातवंतः ॥ १४॥ इतिविराटपर्वणिनैलकंठीयेभारतभावदीपेएकादशोऽध्यायः ॥ ११॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ प्रकृतिंजातिं विनयंशिक्षां प्रतिपत्तिंदोषनिराकरणप्रकारं चिकित्सितंव्याध्युपशमोपायं ॥ ७ ॥ कातरंभीरु वडवाअश्वा अतएवग्रंथिकंअश्वशास्त्रज्ञं ॥ ८ ॥ ९ ॥ १० ॥

वैशंपायनउवाच अथापरोदृश्यतपांडवःप्रभुर्विराटराजंतरसासमेयिवान् ॥ तमापतंतंददृशेपृथग्जनोविमुक्तमभ्रादिवसूर्यमंडलं ॥ १ ॥ सवैहयानैक्षत
तांस्ततस्ततःसमीक्षमाणंसददर्शमत्स्यराट् ॥ ततोब्रवीत्ताननुगान्नरेश्वरःकुतोयमायातिनरोऽमरोपमः ॥ २॥ अयंहयानीक्षतिमामकान्दृढंध्रुवंहयज्ञोभविता
विचक्षणः ॥ प्रवेश्यतामेषसमीपमाशुमेविभातिवीरोहियथाऽमरस्तथा ॥ ३ ॥ अभ्येत्यराजानममित्रहाऽब्रवीज्जयोस्तुतेपार्थिवभद्रमस्तुवः ॥ हयेषुयुक्तोनृप
संमतःसदातवाश्वसूतोनिपुणोभवाम्यहं ॥ ४॥ विराटउवाच ददामियानानिधनंनिवेशनंममाश्वसूतोभवितुंत्वमर्हसि ॥ कुतोसिकस्यासिकथंत्वमागतःप्र
ब्रूहिशिल्पंतवविद्यतेचयत् ॥ ५ ॥ नकुलउवाच पंचानांपांडुपुत्राणांज्येष्ठोभ्रातायुधिष्ठिरः ॥ तेनाहमश्वेषुपुरानियुक्तःशत्रुकर्शन ॥ ६ ॥ अश्वानांप्रकृतिंवेद्मि
विनयंचापिसर्वशः ॥ दुष्टानांप्रतिपत्तिंचकृत्स्नंचैवचिकित्सितं ॥ ७ ॥ नकातरंस्यान्ममजातुवाहनंनमेस्तिदुष्टावडवाकुतोहयाः ॥ जनस्तुमामाहसचापिपांड
वोयुधिष्ठिरोग्रंथिकमेवनामतः ॥ ८ ॥ विराटउवाच यदस्तिकिंचिन्ममवाजिवाहनंतदस्तुसर्वंत्वदधीनमद्यवै ॥ येचापिकेचिन्ममवाजियोजकास्त्वदाश्रयाः
सारथयश्चसंतुमे ॥ ९ ॥ इदंतवेष्टंयदिवैसुरोपमब्रवीहियत्तेप्रसमीक्षितंवसु ॥ नतेनुरूपंहयकर्मविद्यतेप्रभासिराजवद्धिसंमतोमम ॥ १० ॥ युधिष्ठिरस्येवहिद
र्शनेनमेसमंतवेदंप्रियमत्रदर्शनं ॥ कथंतुभृत्यैःसविनाकृतोवनेवसत्यनिंद्योरमतेचपांडवः ॥ ११ ॥ वैशंपायनउवाच तथासगंधर्ववरोपमोयुवाविराटराज्ञा
मुदितेनपूजितः ॥ नचैनमन्येपिविदुःकथंचनप्रियाभिरामंविचरंतमंतरा ॥ १२ ॥ एवंहिमत्स्येन्यवसंतपांडवायथाप्रतिज्ञाभिरमोघदर्शनाः ॥ अज्ञातचर्यांव्यचर
न्समाहिताःसमुद्रनेमीपतयोतिदुःखिताः ॥ १३ ॥ इतिश्रीम० विराटप० पां० नकुलप्रवेशेद्वादशोऽध्यायः ॥ १२ ॥ समाप्तंचेदंप्रवेशपर्व ॥ ७॥ ॥ ७॥ अथसमय
पालनपर्व ॥ जनमेजयउवाच एवंतेमत्स्यनगरेप्रच्छन्नाःकुरुनंदनाः ॥ अतऊर्ध्वंमहावीर्याःकिमकुर्वतवैद्विज ॥ १ ॥ वैशंपायनउवाच एवंमत्स्यस्यनगरेप्र
च्छन्नाःकुरुनंदनाः ॥ आराधयंतोराजानंयदकुर्वततच्छृणु ॥ २ ॥ तृणबिंदुप्रसादाच्चधर्मस्यचमहात्मनः ॥ अज्ञातवासमेवंतुविराटनगरेऽवसन् ॥ ३॥

॥ ११ ॥ १२ ॥ १३ ॥ इतिश्रीविराटपर्वणिनैलकंठीयेभारतभावदीपेनकुलप्रवेशोनामद्वादशोध्यायः ॥ १२ ॥ ॥ ७ ॥ ॥ ७ ॥ १ ॥ २ ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ संपादयंतोऽन्योन्यमाराधयंतः गर्भधृताइवप्रच्छन्नत्वेनसेवाश्रमेणचदुःखिताइत्यर्थः ॥ १२ ॥ १३ ॥ ब्रह्मणउत्सवःशरदिनवधान्योत्पत्तौसर्वैःक्रियतेस
चदेशविशेषेप्रसिद्धः ॥ १४ ॥ यथाब्रह्मणःसमाजेब्रह्मलोकेकैलासेवापशुपतेःसमाजेइवमत्स्येषुसमापेतुरितिसंबंधः ॥ १५ ॥ १६ ॥ स्ववदाताःअत्यंतनिर्मलाः मनस्विनःप्रीतमनसः ॥ लब्धलक्षाःप्राप्तवि

युधिष्ठिरःसभास्तारोमत्स्यानामभवत्प्रियः ॥ तथैवचविराटस्यसपुत्रस्यविशांपते ॥ ४ ॥ सत्वक्षहृदयज्ञस्तान्क्रीडयामासपांडवः ॥ अक्षवत्यांयथाकामंसूत्रब
द्धानिवद्विजान् ॥ ५ ॥ अज्ञातंचविराटस्यविजित्यवसुधर्मराट् ॥ भ्रातृभ्यःपुरुषव्याघ्रोयथार्हंसंप्रयच्छति ॥ ६ ॥ भीमसेनोपिमांसानिभक्ष्याणिविविधानिच ॥
अतिसृष्टानिमत्स्येनविक्रीणीतेयुधिष्ठिरे ॥ ७ ॥ वासांसिपरिजीर्णानिलब्धान्यंतःपुरेर्जुनः ॥ विक्रीणानश्चसर्वेभ्यःपांडवेभ्यःप्रयच्छति ॥ ८ ॥ सहदेवोपिगोपा
नांवेषमास्थायपांडवः ॥ दधिक्षीरंघृतंचैवपांडवेभ्यःप्रयच्छति ॥ ९ ॥ नकुलोपिधनंलब्ध्वाकृतेकर्मणिवाजिनां ॥ तुष्टेतस्मिन्नरपतौपांडवेभ्यःप्रयच्छति ॥ १० ॥
कृष्णातुसर्वान्भर्तॄंस्तान्निरीक्षंतीतपस्विनी ॥ यथापुनरविज्ञातातथाचरतिभामिनी ॥ ११ ॥ एवंसंपादयंतस्तेतदान्योन्यंमहारथाः ॥ विराटनगरेचेरुःपुनर्गर्भ
धृताइव ॥ १२ ॥ साशंकाधार्त्तराष्ट्रस्यभयात्पांडुसुतास्तदा ॥ प्रेक्षमाणास्तदाकृष्णामूषुश्छन्नानराधिप ॥ १३ ॥ अथमासेचतुर्थेतुब्रह्मणःसुमहोत्सवः ॥ आसी
त्समृद्धोमत्स्येषुपुरुषाणांसुसंमतः ॥ १४ ॥ तत्रमल्लाःसमापेतुर्दिग्भ्योराजन्सहस्रशः ॥ समाजेब्रह्मणोराजन्यथापशुपतेरिव ॥ १५ ॥ महाकायामहावीर्याःका
लखंजाइवासुराः ॥ वीर्योन्मत्तावलोदग्राराज्ञासमभिपूजिताः ॥ १६ ॥ सिंहस्कंधकटिग्रीवाःस्ववदातामनस्विनः ॥ असकृल्लब्धलक्षास्तेरंगेपार्थिवसन्निधौ
॥ १७ ॥ तेषामेकोमहानासीत्सर्वमल्लानथाह्वयत् ॥ आवल्गमानंतंरंगेनोपतिष्ठतिकश्चन ॥ १८ ॥ यदासर्वेविमनसस्तेमल्लाहतचेतसः ॥ अथसूदेनतंमल्लंयोध
यामासमत्स्यराट् ॥ १९ ॥ नोद्यमानस्तदाभीमोदुःखेनैवाकरोन्मतिं ॥ नहिशक्नोतिविवृतेप्रत्याख्यातुंनराधिपं ॥ २० ॥ ततःसपुरुषव्याघ्रःशार्दूलशिथिल
श्चरन् ॥ प्रविवेशमहारंगंविराटमभिपूजयन् ॥ २१ ॥ ववंधकक्षांकौंतेयस्ततःसंहर्षयन्जनं ॥ ततस्तुवृत्रसंकाशंभीमोमल्लंसमाह्वयत् ॥ २२ ॥ जीमूतंनामतं
तत्रमल्लंप्रख्यातविक्रमं ॥ तावुभौसुमहोत्साहावुभौभीमपराक्रमौ ॥ २३ ॥ मत्ताविवमहाकायौवारणौषष्टिहायनौ ॥ ततस्तौनरशार्दूलौबाहुयुद्धंसमीयतुः ॥ २४ ॥
वीरौपरमसंहृष्टावन्योन्यजयकांक्षिणौ ॥ आसीत्सुभीमःसंपातोवज्रपर्वतयोरिव ॥ २५ ॥

जयाः ॥ १७ ॥ १८ ॥ सूदेनभीमेन ॥ १९ ॥ दुःखेनैवपारतंत्र्यात्प्राकट्यभयाद्वा
दुःखंनतुभंगभयात् विवृतेप्रकाशे ॥ २० ॥ २१ ॥ कक्षांपरिकरं कच्छामितिपाठेपिसएवार्थः यद्वाकक्षांरज्जुं रज्वापाटनभयान्मल्लैरंगुल्योबध्यंतइतिप्रसिद्धेरंगुलीर्बद्ध्वेत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

॥ २६ ॥ कृतंकचिद्देशेनिपीडनं प्रतिकृतंतस्यमोचनं सुसंकटैःमुष्टिप्रहणेनकृशीकृतैः सकंटकैरितिपाठेसकवचैःसकिणैर्वा कंटकोबाहुचरणकवचेकठिनेकिणेइतिविश्वः संनिपातोऽगसंघट्टनं अवधूतंतेनैवंदू
रीकरणं प्रमाथादयउक्तामल्लशास्त्रे निपात्यपेषणंभूमौप्रमाथइतिकथ्यते यत्तूत्थायांगमथनंतदुन्मथनमुच्यते ॥ २७॥ क्षेपणंकथ्यतेयत्तुस्थानात्प्रच्यावनंहठात् उभयोर्भुजयोर्मुष्टिरुरोमध्येविपात्यते मुष्टिरित्यु
च्यतेतज्ज्ञैर्मल्लविद्याविशारदैः अवाङ्मुखंस्कंधगतंभ्रामयित्वातथैववयः क्षिप्तस्यशब्दःसभवेद्वराहोद्धूतनिःस्वनः तलैर्वज्रनिपातैःवज्रवद्दृढपातैश्चपेटैः अंगुल्यःप्रसृतायास्तुताःप्रसृष्टाउदीरिताः ॥२८ ॥ ऋज्वीदृ

उभौपरमसंहृष्टौबलेनातिबलावुभौ॥ अन्योन्यस्यांतरंप्रेप्सूपरस्परजयैषिणौ॥ २६॥ उभौपरमसंहृष्टौमत्ताविवमहागजौ॥ कृतप्रतिकृतैश्चित्रैर्बाहुभिश्चसुसं
कटैः॥ सन्निपातावधूतैश्चप्रमाथोन्मथनैस्तथा॥ २७॥ क्षेपणैर्मुष्टिभिश्चैववराहोद्धूतनिःस्वनैः॥ तलैर्वज्रनिपातैश्चप्रसृष्टाभिस्तथैवच॥ २८ ॥शलाकानख
पातैश्चपादोद्धूतैश्चदारुणैः जानुभिश्चाश्मनिर्घोषैःशिरोभिश्चावघट्टनैः ॥ २९ ॥ तद्युद्धमभवद्घोरमशस्त्रंबाहुतेजसा॥ बलप्राणेनशूराणांसमाजोत्सवसन्नि
धौ॥ ३० ॥ अरज्यतजनःसर्वःसोत्कृष्टनिनदोत्थितः॥ बलिनोःसंयुगेराजन्वृत्रवासवयोरिव॥ ३१ ॥ प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥ आकर्षतुरथा
न्योन्यंजानुभिश्चापिजघ्नतुः॥ ३२ ॥ ततःशब्देनमहताभर्त्सयंतौपरस्परं॥ व्यूढोरस्कौदीर्घभुजौनियुद्धकुशलावुभौ ॥ बाहुभिःसमसज्जेतामायसैःपरिघैरिव॥
॥३३॥चकर्षदोर्भ्यामुत्पात्यभीमोमल्लममित्रहा॥ निनदंतमभिक्रोशन्शार्दूलइववारणं॥३४॥समुद्यम्यमहाबाहुर्भ्रामयामाससवीर्यवान्॥ततोमल्लाश्चमत्स्या
श्चविस्मयंचक्रिरेपरं॥ ३५ ॥ भ्रामयित्वाशतगुणंगतसत्वमचेतनं॥ प्रत्यपिंषन्महाबाहुर्मल्लंभुविवृकोदरः॥ ३६ ॥ तस्मिन्विनिहतेवीरेजीमूतेलोकविश्रुते॥
विराटःपरमंहर्षमगच्छद्बांधवैःसह॥ ३७॥ प्रहर्षात्प्रददौवित्तंबहुराजामहामनाः॥ बल्लवायमहारंगेयथावैश्रवणस्तथा ॥ ३८॥ एवंससुबहून्मल्लान्पुरुषांश्चम
हाबलान्॥ विनिघ्नन्मत्स्यराजस्यप्रीतिमाहरदुत्तमां॥ ३९ ॥ यदास्यतुल्यःपुरुषोनकश्चित्तत्रविद्यते॥ ततोव्याघ्रैश्चसिंहैश्चद्विरदैश्चाप्ययोधयत् ॥ ४० ॥पुनरं
तःपुरगतःस्त्रीणांमध्येवृकोदरः॥योध्यतेसविराटेनसिंहैर्मत्तैर्महाबलैः ॥ ४१ ॥

दारुषाक्षिमाशलाकासांगुलीस्मृता तस्यानखपातैः पादोद्धूतैःपादप्रसारणेनाक्षेपैः जानु
भिःशिरोभिश्चकृतैरवघट्टनैरास्फालनैः अश्मनिर्घोषैरित्युभयविशेषणं ॥ २९ ॥ अशस्त्रंनियं यथोक्तंतत्रैवं बाहुयुद्धंहिमल्लानामशस्त्रमृषिभिःस्मृतं मृतस्यतस्यनस्वर्गोयशोनेहापिविद्यतइति बलप्राणेनबले
नशारीरबलेनप्राणेनमानसबलेन ॥ ३० ॥ सोत्कृष्टनिनदःहीहीशब्दोच्चारणेनयज्जितस्यसमुत्थापनंतत्सहितः ॥३१॥ आकृष्यक्रोडीकरणंप्रकर्षणमुदाहृतं आकर्षणंलीलयैवसंमुखीकरणंस्मृतं पुरःपश्चात्पा
र्श्वयोश्चाभ्याकर्षोभ्रमणंतथा पश्चात्प्रपातनंवेगाद्विकर्षणमुदाहृतं ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ गतसत्वंनष्टबुद्धिंअतएवअचेतनंशवभूतं ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ इतिश्रीविराटपर्वणिनैलकंठीयेभारतभावदीपेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ ॥१॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अन्यदौषधंएतांविना ॥८॥ प्रत्यग्रह



बीभत्सुरपिगीतेनस्वनृत्येनचपांडवः ॥ विराटंतोषयामाससर्वाश्चांतःपुरस्त्रियः ॥ ४२ ॥ अश्वैर्विनीतैर्जवनैस्तत्रतत्रसमागतैः ॥ तोषयामाससंराजानंनकुलो
नृपसत्तमं ॥ ४३ ॥ तस्मैप्रदेयंप्रायच्छत्प्रीतोराजाधनंबहु ॥ विनीतान्वृषभान्दृष्ट्वासहदेवस्यचाभितः ॥ धनंददौबहुविधंविराटःपुरुषर्षभः ॥ ४४ ॥ द्रौपदी
प्रेक्ष्यतान्सर्वान्क्लिश्यमानान्महारथान् ॥ नातिप्रीतमनाराजन्निःश्वासपरमाभवत् ॥ ४५ ॥ एवंतेन्यवसंस्तत्रप्रच्छन्नाःपुरुषर्षभाः ॥ कर्माणितस्यकुर्वाणाविरा
टनृपतेस्तदा ॥ ४६ ॥ इ० म० भा० विराट० समयपालनप० जीमूतवधेत्रयोदशोध्यायः ॥ १३ ॥ समाप्तंचेदंसमयपालनपर्व ॥ ७ ॥ अथकीचकवधपर्व ॥ वैशंपा
यनउवाच वसमानेषुपार्थेषुमत्स्यस्यनगरेतदा ॥ महारथेषुच्छन्नेषुमासादशसमाययुः ॥ १ ॥ याज्ञसेनीसुदेष्णांतुशुश्रूषंतीविशांपते ॥ आवसत्परिचारार्हासु
दुःखंजनमेजय ॥ २ ॥ तथाचरंतींपांचालींसुदेष्णायानिवेशने ॥ तांदेवींतोषयामासतथाचांतःपुरस्त्रियः ॥ ३ ॥ तस्मिन्वर्षेगतप्रायेकीचकस्तुमहाबलः ॥ सेना
पतिर्विराटस्यददर्शद्रुपदात्मजां ॥ ४ ॥ तांदृष्ट्वादेवगर्भाभांचरंतींदेवतामिव ॥ कीचकःकामयामासकामबाणप्रपीडितः ॥ ५ ॥ सतुकामाग्निसंतप्तःसुदेष्णाम
भिगम्यवै ॥ प्रहसन्निवसेनानीरिदंवचनमब्रवीत् ॥ ६ ॥ नेयंमयाजातुपुरेहदृष्टाराज्ञोविराटस्यनिवेशनेशुभा ॥ रूपेणचोन्मादयतीवमांभृशंगंधेनजातामदिरे
वभामिनी ॥ ७ ॥ कादेवरूपाहृदयंगमाशुभेत्याचक्ष्वमेकस्यकुतोत्रशोभने ॥ चित्तंहिनिर्मथ्यकरोतिमांवशेनचान्यदत्रौषधमस्तिमेमतं ॥ ८ ॥ अहोतवेयंपरि
चारिकाशुभाप्रत्यग्ररूपाप्रतिभातिमामियं ॥ अयुक्तरूपंहिकरोतिकर्मतेप्रशास्तुमांयच्चममास्तिकिंचन ॥ ९ ॥ प्रभूतनागाश्वरथंमहाजनंसमृद्धियुक्तंबहुपा
नभोजनं ॥ मनोहरंकांचनचित्रभूषणंगृहंमहच्छोभयतामियंमम ॥ १० ॥ ततःसुदेष्णामनुमंत्र्यकीचकस्ततःसमभ्येत्यनराधिपात्मजां ॥ उवाचकृष्णामभिसां
त्वयंस्तदामृगेंद्रकन्यामिवजंबुकोवने ॥ ११ ॥ कात्वंकस्यासिकल्याणिकुतोवात्वंवरानने ॥ प्राप्ताविराटनगरंतत्वमाचक्ष्वशोभने ॥ १२ ॥ रूपमग्र्यंतथाकांतिः
सौकुमार्यमनुत्तमं ॥ कांत्याविभातिवक्त्रंतेशशांकइवनिर्मलं ॥ १३ ॥ नेत्रेसुविपुलेसुभ्रुपद्मपत्रनिभेशुभे ॥ वाक्यंतेचारुसर्वांगिपरपुष्टरुतोपमं ॥ १४ ॥ एवं
रूपामयानारीकाचिदन्यामहीतले ॥ नदृष्टपूर्वासुश्रोणियादृशीत्वमनिंदिते ॥ १५ ॥



पादिव्यरूपा ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ परपुष्टःकोकिलः ॥ १४ ॥ १५ ॥

भूतिःईश्वरीऐश्वर्याभिमानिनीदेवता ॥ १६ ॥ अनंगांगविहारिणीस्मरदेहेनक्रीडंतीरतिरित्यर्थः ॥ १७ ॥ ईक्षणपक्ष्मणांनेत्रपक्ष्मणांस्मितंईषदुन्मीलनंतदेवज्योत्स्नोपमंमनसआल्हादकरं लक्ष्माणमितिपाठेव क्रचंद्रविशेषणं ॥ १८ ॥ १९ ॥ सुजातौउन्नतौ ॥ निरंतरौपृथुत्वात्संश्लिष्टौ ॥ २० ॥ कुड्मलेति मुकुलीभूतपद्माकारौ ॥ २१ ॥ करापंअंगुष्ठादिमध्यमांतोवितस्तिःतेनसंमितंकृशमित्यर्थः ॥ २२ ॥ २३ ॥

लक्ष्मीःपद्मालयाकात्वमथभूतिःसुमध्यमे ॥ ह्रीःश्रीःकीर्त्तिरथोकांतिरासांकात्वंवरानने ॥ १६ ॥ अतीवरूपिणीकिंत्वमनंगांगविहारिणी ॥ अतीवभ्राजसेसु भ्रुप्रभेवेंदोरनुत्तमा ॥ १७ ॥ अपिचेक्षणपक्ष्मणांस्मितज्योत्स्नोपमंशुभं ॥ दिव्यांशुरश्मिभिर्वृत्तंदिव्यकांतिमनोरमं ॥ १८ ॥ निरीक्ष्यवक्रचंद्रंतेलक्ष्म्यानुपम यायुतं ॥ कृत्स्नेजगतिकोनेहकामस्यवशगोभवेत् ॥ १९ ॥ हारालंकारयोग्यौतुस्तनौचोभौसुशोभनौ ॥ सुजातौसहितौलक्ष्म्यापीनौवृत्तौनिरंतरौ ॥ २० ॥ कुड्म लांबुरुहाकारौतवसुभ्रुपयोधरौ ॥ कामप्रतोदाविवमांतुदतश्चारुहासिनि ॥ २१ ॥ वलीविभंगचतुरंस्तनभारविनामितं ॥ कराग्रसंमितंमध्यंतवेदंतनुमध्यमे ॥ २२ ॥ दृष्ट्वैवचारुजघनंसरित्पुलिनसंनिभं ॥ कामव्याधिरसाध्योमामप्याक्रामतिभामिनि ॥ २३ ॥ जज्वालचाग्निर्मदनोदावाग्निरिवनिर्दयः ॥ त्वत्संगमा भिसंकल्पविवृद्धोमांदहत्ययं ॥ २४ ॥ आत्मप्रदानवर्षेणसंगमांभोधरेणच ॥ शमयस्ववरारोहेज्वलंतंमन्मथानलं ॥ २५ ॥ मच्चित्तोन्मादनकरामन्मथस्यशरो त्कराः ॥ त्वत्संगमाशानिशितास्तीव्राःशशिनिभानने ॥ मह्यंविदार्यहृदयमिदंनिर्दयवेगिताः ॥ २६ ॥ प्रविष्टाह्यसितापांगिप्रचंडाश्चंडदारुणाः ॥ अत्युन्मादस मारंभाःप्रीत्युन्मादकराममम ॥ आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ २७ ॥ चित्रमाल्यांबरधरासर्वाभरणभूषिता ॥ कामंप्रकामंसेवत्वंमयासहविलासिनि ॥ २८ ॥ नार्हसीहासुखंवस्तुंसुखार्हासुखवर्जिता ॥ प्राप्नुह्यनुत्तमंसौख्यंमत्तस्त्वंमत्तगामिनि ॥ २९ ॥ स्वादून्यमृतकल्पानिपेयानिविविधानिच ॥ पिबमानाम नोज्ञानिरममाणायथासुखं ॥ ३० ॥ भोगोपचारान्विविधान्सौभाग्यंचाप्यनुत्तमं ॥ पानंपिबमहाभागेभोगैश्चानुत्तमैःशुभैः ॥ ३१ ॥ इदंहिरूपंप्रथमंतवानघेनि रर्थकंकेवलमद्यभामिनि ॥ अधार्यमाणास्रगिवोत्तमाशुभानशोभसेसुंदरिशोभनासती ॥ ३२ ॥ त्यजामिदारान्ममयेपुरातनाभवंतुदास्यस्तवचारुहासिनि ॥ अहंचतेसुंदरिदासवत्स्थितःसदाभविष्येवशगोवरानने ॥ ३५ ॥ द्रौपद्युवाच अप्रार्थनीयामिहमांसूतपुत्राभिमन्यसे ॥ निहीनवर्णांसैरंध्रींबीभत्सांकेशकारि णीं ॥ ३६ ॥ परदारास्मिभद्रंतेनयुक्तंतवसांप्रतं ॥ दयिताःप्राणिनांदाराधर्मंसमनुचिंतय ॥ ३७ ॥

अग्निर्मदनोमदनाग्निः ॥ २४ ॥ २५ ॥ २६ ॥ अत्युन्मादंमरणकाली नसन्निपातंसमारभंतेतेअत्युन्मादसमारंभाः त्वदलाभेमरिष्याम्येवेतिभावः ॥ २७ ॥ कामंस्मरंप्रकाममतिशयितं ॥ २८ ॥ प्राप्नुहिलभस्व ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ अभिमन्यसेकामयसे ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ मिथ्याभिगृध्नःवितथाभिनिवेशी महद्भयंमृत्युं ॥ ३९ ॥४०॥४१॥४२॥४३॥४४॥४५॥४६॥४७॥४८॥४९॥ ५० ॥ ५१ ॥ ५२ ॥ मन्यसेलिप्ससे शिशोश्चंद्रवदहंतवदुर्लभास्मी
तिभावः ॥ ५३ ॥ तेषांप्रियामिति तेषांप्रसिद्धानांगंधर्वाणांप्रियांप्रार्थयतस्तेनवभुविगत्वादिवंवागत्वाशरणंत्राताकश्चिन्नभविष्यति अतएवहेकीचकतेतवकामांधस्यसादृशादृष्टिर्बुद्धिरितियावत् याशुभंस्वी

परदारेनतेबुद्धिर्जातुकार्याकथंचन॥ विवर्जनंह्यकार्याणामेतत्सुपुरुषव्रतं॥ ३८॥ मिथ्याभिगृध्नोहिनरःपापात्मामोहमास्थितः॥ अयशःप्राप्नुयाद्घोरंमहद्वा
प्राप्नुयाद्भयं॥ ३९॥ वैशंपायनउवाच एवमुक्तस्तुसैरंध्याकीचकःकाममोहितः॥ जानन्नपिसुदुर्बुद्धिःपरदाराभिमर्शने ॥ ४०॥ दोषान्बहून्प्राणहरान्सर्व
लोकविगर्हितान्॥ प्रोवाचेदंसुदुर्बुद्धिर्द्रौपदीमजितेंद्रियः॥ ४१॥ नार्हस्येवंवरारोहेप्रत्याख्यातुंवरानने॥ मांमन्मथसमाविष्टंत्वत्कृतेचारुहासिनि॥ ४२॥ प्र
त्याख्यायचमांभीरुवशगंप्रियवादिनं॥ नूनंत्वमसितापांगिपश्चात्तापंकरिष्यसि॥ ४३॥ अहंहिसुभ्रुराज्यस्यकृत्स्नस्यास्यसुमध्यमे॥ प्रभुर्वासयिताचैववी
र्येचाप्रतिमःक्षितौ॥ ४४॥ पृथिव्यांमत्समोनास्तिकश्चिदन्यःपुमानिह॥ रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैःशुभैः॥ ४५॥ सर्वकामसमृद्धेषुभोगेष्वनुपमेष्वि
ह॥ भोक्तव्येषुचकल्याणिकस्माद्दास्येरताह्यसि॥ ४६॥ मयादत्तमिदंराज्यंस्वामिन्यसिशुभानने॥ भजस्वमांवरारोहेभुंक्ष्वभोगाननुत्तमान्॥ ४७॥ एवमु
क्तातुसासाध्वीकीचकेनाशुभंवचः॥ कीचकंप्रत्युवाचेदंगर्हयंत्यस्यतद्वचः॥ ४८॥ सैरंध्युवाच मासूतपुत्रमुह्यस्वमाद्यत्यक्ष्यस्वजीवितं॥ जानीहिपंचभिर्घो
रैर्नित्यंमामभिरक्षितां॥ ४९॥नचाप्यहंत्वयालभ्यागंधर्वाःपतयोमम॥ तेत्वांनिहन्युःकुपिताःसाध्वलंमाव्यनीनशः॥ ५०॥ अशक्यरूपंपुरुषैरध्वानंगंतुमिच्छ
सि॥ यथानिश्चेतनोबालःकूलस्थःकूलमुत्तरं॥ तर्तुमिच्छतिमंदात्मातथात्वंकर्तुमिच्छसि॥ ५१॥ अंतर्महींवायदिवोर्ध्वमुत्पतेःसमुद्रपारंयदिवाप्रधावसि॥
तथापितेषांनविमोक्षमर्हसिप्रमाथिनोदेवसुताहिखेचराः॥ ५२॥ त्वंकालरात्रीमिवकश्चिदातुरःकिंमांदृढंप्रार्थयसेद्यकीचक॥ किंमातुरंकेशयितोयथाशिशु
श्चंद्रंजिघृक्षुरिवमन्यसेहिमां॥५३॥ तेषांप्रियांप्रार्थयतोनतेभुविगत्वादिवंवाशरणंभविष्यति॥ नवर्ततेकीचकतेदृशाशुभंयातेनसंजीवनमर्थयेतसा॥५४॥
॥इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिकीचककृष्णासंवादेचतुर्दशोध्यायः॥ १४॥ ॥छ॥

यंअर्थयेतकामयेत शुभेच्छारूपातवनास्तीत्यर्थः तेनचशुभेनपर
दारनिवृत्तिरूपेणकामितेनसंजीवनंभवतीतिशेषः अन्यथामरिष्यसीत्यर्थः नमेभुवीतिपाठेतेषांप्रियांप्रार्थयतोमेममकोपित्रातानभविष्यतीतिदृशाबुद्धिस्तवनास्तीतिसंबंधः यातेचसंजीवनमर्थयत्तमितिपाठेतु
यादृष्टिस्तेतवसंजीवनंचभवति कीदृशंसंजीवनंअर्थयत्तंवस्त्वधीनं तस्माद्वितथाभिनिवेशिनस्तेजीवनंनास्तीत्यर्थः ॥ ५४ ॥ इतिविराटप०नैल०भारतभा०चतुर्दशोध्यायः ॥ १४ ॥ ॥छ॥ ॥छ॥

॥ १ ॥ समेयात्मांउपगच्छेत् माऊहादितिछेदः ऊहात्वितर्कात्तंउपायंयुक्त्यापरीप्सस्वेतियोज्यं . प्राणान्माप्रहासिषमितिच ॥ २ ॥ ३ ॥ कृष्णायाःप्राप्त्यर्थंउद्योगंउद्यमंचानुचिंत्येतियोज्यं ॥ ४ ॥ पर्वणि मद्यपायिनांउत्सवकालेचतुर्दश्यादौ समुद्दिश्यअद्याहंसुदेष्णार्थमन्नादिकंकारयामीतिकीर्तयित्वाख्यापयित्वा ॥ ५ ॥ विजनेएकांते निरवग्रहेनिष्प्रतिबंधे ॥ ६ ॥ ७ ॥ ८ ॥ उपमंत्रिताप्रार्थिता ॥ ९ ॥

वैशंपायनउवाच . प्रत्याख्यातोराजपुत्र्यासुदेष्णांकीचकोब्रवीत् ॥ अमर्यादेनकामेनघोरेणाभिपरिप्लुतः ॥ १ ॥ यथाकैकेयिसैरंध्रीसमेयात्तद्विधीयतां ॥ येनोपायेनसैरंध्रींभजेन्मांगजगामिनी ॥ तंसुदेष्णोपरीप्सस्वप्राणान्मोहात्प्रहासिषं ॥ २ ॥ वैशंपायनउवाच तस्यसाबहुशःश्रुत्वावाचंविलपतस्तदा ॥ विराटमहिषीदेवीकृपांचक्रेमनस्विनी ॥ ३ ॥ स्वमंत्रमभिसंधायतस्यार्थमनुचिंत्यच ॥ उद्योगंचैवकृष्णायाःसुदेष्णासूतमब्रवीत् ॥ ४ ॥ पर्वणित्वंसमुद्दिश्य सुरामन्नंचकारय ॥ तत्रैनांप्रेषयिष्यामिसुराहारींतवांतिकं ॥ ५ ॥ तत्रसंप्रेषितामेनांविजनेनिरवग्रहे ॥ सांत्वयेथाययथाकामंसांत्वमानारमेद्यदि ॥ ६ ॥ वैशंपायनउवाच इत्युक्तःसविनिष्क्रम्यभगिन्यावचनात्तदा ॥ सुरामाहारयामासराजार्हांसुपरिष्कृतां ॥ ७ ॥ भक्ष्यांश्चविविधाकारान्बहूंश्चोच्चावचांस्तदा ॥ कारयामासंकुशलैरन्नंपानंसुशोभनं ॥ ८ ॥ तस्मिन्कृतेतदादेवीकीचकेनोपमंत्रिता ॥ सुदेष्णाप्रेषयामाससैरंध्रींकीचकालयं ॥ ९ ॥ सुदेष्णोवाच उत्तिष्ठगच्छसैरंध्रिकीचकस्यनिवेशनं ॥ पानमानयकल्याणिपिपासामांप्रबाधते ॥ १० ॥ सैरंध्र्युवाच नगच्छेयमहंतस्यराजपुत्रिनिवेशनं ॥ त्वमेवराज्ञिजानासियथासनिरपत्रपः ॥ ११ ॥ नचाहमनवद्यांगितववेश्मनिभामिनि ॥ कामवृत्ताभविष्यामिपतीनांव्यभिचारिणी ॥ १२ ॥ त्वंचैवदेविजानासियथासस्समयःकृतः ॥ प्रविशंत्यामयापूर्वंतववेश्मनिभामिनि ॥ १३ ॥ कीचकस्तुसुकेशांतेमूढोमदनदर्पितः ॥ सोवमंस्यतिमांदृष्ट्वानयास्येतत्रशोभने ॥ १४ ॥ संतिवह्व्यस्तवप्रेष्याराजपुत्रिवशानुगाः ॥ अन्यांप्रेषयभद्रंतेसहिमामवमंस्यते ॥ १५ ॥ सुदेष्णोवाच नैवत्वांजातुहिंस्यात्सइतःसंप्रेषितामया ॥ इत्युक्त्वाप्रददौपात्रंसपिधानंहिरण्मयं ॥ १६ ॥ साशंकमानारुदतीदैवंशरणमीयुषी ॥ प्रातिष्ठतसुराहारीकीचकस्यनिवेशनं ॥ १७ ॥ सैरंध्र्युवाच यथाहमन्यंभर्तृभ्योनाभिजानामिकंचन ॥ तेनसत्येनमांप्राप्तांमाकुर्यात्कीचकोवशे ॥ १८ ॥ वैशंपायनउवाच उपातिष्ठतसासूर्यंमुहूर्त्तमबलाततः ॥ सतस्यास्तनुमध्यायाःसर्वंसूर्योवबुद्धवान् ॥ १९ ॥ अंतर्हितंततस्तस्यारक्षोरक्षार्थमादिशत् ॥ तच्चैनांनाजहात्तत्रसर्वावस्थास्वनिंदितां ॥ २० ॥

पानंमद्यं सुरामन्नंचेत्युपक्रमात् तस्यैवपिपासापातुमिच्छा ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

॥२१॥ इतिविराटप० नैल० भारतभा० पंचदशोध्यायः ॥ १५ ॥ ॥ १ ॥ परितोहाटकेययोस्तौपरिहाटकेकुंडलेताटंकेइत्यर्थः ॥ २ ॥ मधुमाधवींमधुपुष्पजांमदिरां ॥ ३ ॥ सुराहारींसुरामाहर्त्तुकामां पिपासामेतिमेममअतिपिपासा ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ विधुन्वानाकंपमाना ॥ ९ ॥ १० ॥ अपोवाहदूरीचकार ॥ ११ ॥१२॥१३॥१४॥धूमच्छायाःकर्म नेत्रेकर्तृणी अभजतां छायामि

तांमृगीमिवसंत्रस्तांदृष्ट्वाकृष्णांसमीपगां॥उदतिष्ठन्मुदासूतोनावंलब्ध्वेवपारगः ॥२१॥इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीसुराहरणोपंचदशोध्यायः॥१५॥कीचकउवाच स्वागतंतेसुकेशांतेसुव्युष्टारजनीमम॥स्वामिनीत्वमनुप्राप्ताप्रकुरुष्वममप्रियं॥१॥सुवर्णमालाःकंबूश्चकुंडलेपरिहाटके॥नानापत्तनजेशुभ्रेमणिरत्नंचशोभनं॥२॥आहरंतुचवस्त्राणिकौशिकान्यजिनानिच॥अस्तिमेशयनंदिव्यंत्वदर्थमुपकल्पितं॥एहितत्रमयासार्द्धंपिबस्वमधुमाधवीं॥३॥ द्रौपद्युवाच अप्रैषीद्राजपुत्रीमांसुराहारींतवांतिकं॥पानमाहरमेक्षिप्रंपिपासामेतिचाब्रवीत्॥४॥ कीचकउवाच अन्याभद्रेनयिष्यंतिराजपुत्र्याःप्रतिश्रुतं॥ इत्येनांदक्षिणेपाणौसूतपुत्रःपरामृशत्॥५॥ द्रौपद्युवाच यथैवाहंनाभिचरेकदाचित्पतीन्मदाद्वैमनसापिजातु॥तेनैवसत्येनवशीकृतंत्वांद्रष्टास्मिपापंपरिकृष्यमाणं॥६॥ वैशंपायनउवाच सतामभिप्रेक्ष्यविशालनेत्रांजिघृक्षमाणःपरिभर्त्सयंतीं॥ जग्राहतामुत्तरवस्त्रदेशेसकीचकस्तांसहसाक्षिपंतीं॥७॥ प्रगृह्यमाणातुमहाजवेनमुहुर्विनिश्वस्यचराजपुत्री॥तयासमाक्षिप्ततनुःसपापःपपातशाखीवनिकृत्तमूलः॥८॥सागृहीताविधुन्वानाभूमावाक्षिप्यकीचकं॥सभांशरणमागच्छद्यत्रराजायुधिष्ठिरः॥९॥तांकीचकःप्रधावंतींकेशपाशेपरामृशत्॥अथैनांपश्यतोराज्ञःपातयित्वापदावधीत्॥१०॥तस्यायोसौतदार्केणराक्षसःसंनियोजितः॥सकीचकमपोवाहवातवेगेनभारत॥११॥सपपाततदाभूमौरक्षोबलसमाहतः॥ विघूर्णमानोनिश्चेष्टश्छिन्नमूलइवद्रुमः॥१२॥तांचासीनौददृशतुर्भीमसेनयुधिष्ठिरौ॥ अमृष्यमाणौकृष्णायाः कीचकेनपराभवं॥ १३ ॥ तस्यभीमोवधंप्रेप्सुःकीचकस्यदुरात्मनः॥दंतैर्दंतांस्तदारोषान्निष्पिपेषमहामनाः॥१४॥धूमच्छायात्यभजतांनेत्रेचोच्छ्रितपक्ष्मणी॥सस्वेदाभ्रुकुटीचोग्राललाटेसमवर्त्तत॥१५॥ हस्तेनममृदेचैवललाटंपरवीरहा॥भूयश्चत्वरितःक्रुद्धःसहसोत्थातुमैच्छत॥ १६ ॥ अथावमृद्गादंगुष्ठमंगुष्ठेनयुधिष्ठिरः॥ प्रबोधनभयाद्राजाभीमंतंप्रत्यषेधयत्॥१७॥ तंमत्तमिवमातंगंवीक्षमाणंवनस्पतिं॥सतमावारयामासभीमसेनंयुधिष्ठिरः॥१८॥

त्येकवचनांतःपाठःस्वच्छः ॥ १५ ॥ १६ ॥ अंगुष्ठंपादांगुष्ठंअंगुष्ठेनहस्तांगुष्ठेन आचारादेवंज्ञेयं ॥ १७ ॥ १८ ॥

॥ १९ ॥ २० ॥ अभिरक्षंतीगूहमाना ॥ धर्मसंहिताधर्मबद्धा ॥ २१ ॥ षष्ठेविषयेदेशपंचकव्यवधानेपिनस्वपितितेषांसार्वभौमत्वात् यद्वा बाह्येंद्रियग्राह्यपंचविषयापेक्षयाषष्ठेमनोमात्रग्राह्येस्वप्नमनोरथा

आलोकयसिकिंवृक्षंसूददारुकृतेनवै ॥ यदितेदारुभिःकृत्यंबहिर्वृक्षान्निगृह्यतां ॥ १९ ॥ सासभाद्वारमासाद्यरुदतीमत्स्यमब्रवीत् ॥ अवेक्षमाणासुश्रोणीप तींस्तान्दीनचेतसः ॥ २० ॥ आकारमभिरक्षंतीप्रतिज्ञाधर्मसंहिता ॥ दह्यमानेवरौद्रेणचक्षुपाद्रुपदात्मजा ॥ २१ ॥ द्रौपद्युवाच येषांवैरीनस्वपितिपष्ठेपि विषयेवसन् ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदावधीत् ॥ २२ ॥ येदद्युर्नचयाचेयुर्ब्रह्मण्याःसत्यवादिनः ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदावधीत् ॥ २३ ॥ येषांदुंदुभिनिर्घोषोज्याघोषःश्रूयतेऽनिशं ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदावधीत् ॥ २४ ॥ येचतेजस्विनोदांताबलवंतोऽतिमानिनः ॥ तेषांमांमानिनीं भार्यांसूतपुत्रःपदावधीत् ॥ २५ ॥ सर्वलोकमिमंहन्युर्धर्मपाशसितास्तुये ॥ तेषांमांमानिनींभार्यांसूतपुत्रःपदावधीत् ॥ २६ ॥ शरणंयेप्रपन्नानांभवंतिशरणा र्थिनां ॥ चरंतिलोकेप्रच्छन्नाःक्वनुतेद्यमहारथाः ॥ २७ ॥ कथंतेसूतपुत्रेणवध्यमानांप्रियांसतीं ॥ मर्पयंतियथाक्लीबाबलवंतोऽमितौजसः ॥ २८ ॥ क्वनुतेषाममर्षश्चवीर्यंतेजश्चवर्तते ॥ नपरीप्संतियेभार्यांवध्यमानांदुरात्मना ॥ २९ ॥ मयात्रशक्यंकिंकर्तुंविराटेधर्मदूषके ॥ यःपश्यन्मांमर्पयतिवध्यमानामनागसं ॥ ३० ॥ नराजाराजवत्किंचित्समाचरतिकीचके ॥ दस्यूनामिवधर्मस्तेनहिसंसदिशोभते ॥ ३१ ॥ नाहमेतेनयुक्तंवैहंतुंमत्स्यतवांतिके ॥ सभासदोत्रपश्यंतुकीचकस्य व्यतिक्रमं ॥ ३२ ॥ कीचकोनचधर्मज्ञोनचमत्स्यःकथंचन ॥ सभासदोप्यधर्मज्ञायएनंपर्युपासते ॥ ३३ ॥ वैशंपायनउवाच एवंविधैर्वचोभिःसातदा कृष्णाश्रुलोचना ॥ उपालभतराजानंमत्स्यानांवरवर्णिनी ॥ ३४ ॥ विराटउवाच परोक्षंनाभिजानामिविग्रहंयुवयोरहं ॥ अर्थतत्त्वमविज्ञायकिंनुस्यात्कौश लंमम ॥ ३५ ॥ वैशंपायनउवाच ततस्तुसभ्याविज्ञायकृष्णांभूयोभ्यपूजयन् ॥ साधुसाध्वितिचाप्याहुःकीचकंचव्यगर्हयन् ॥ ३६ ॥ सभ्याऊचुः यस्ये यंचारुसर्वांगीभार्यास्यादायतेक्षणा ॥ परोलाभस्तुतस्यस्यान्नचशोचेत्कथंचन ॥ ३७ ॥ नहीदृशीमनुष्येषुसुलभावरवर्णिनी ॥ नारीसर्वानवद्यांगीदेवीमन्या महेवयं ॥ ३८ ॥ वैशंपायनउवाच एवंसंपूजयंतस्तेकृष्णांप्रेक्ष्यसभासदः ॥ युधिष्ठिरस्यकोपात्तुललाटेस्वेदआगमत् ॥ ३९ ॥

दिरूपेपिविषयेनस्वपितिभयार्दितःसन्किमुतलोकेनस्वपितीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ सिताःबद्धाः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ कौशलंसाध्वसाधु विर्णयोतिशेषःकिंनुकथंनु ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

गात्रस्था:अत्रमास्था:मातिष्ठ ॥ ४० ॥ ४१ ॥ ४२ ॥ शैलूषीवनर्नटीवनिलज्जा ॥ ४३ ॥ दुःखंदुःखयितारं व्यपनेष्यंतिजीवितादितिशेषः ॥ ४४ ॥ घृणिनांदयावतांतेषामर्थे तस्यतस्यसर्वस्यैवतेवध्या:
स्युः ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ पश्यतोराज्ञइत्यनादरेषष्ठी राजानंलक्षीकृत्येत्यर्थः ॥ ४९ ॥ ५० ॥ ५१ ॥ इतिविराटपर्वणिनैल० भारतभावदीपेषोडशोऽध्यायः ॥ १६ ॥ ॥ ७ ॥ सेनावाह

अथाब्रवीद्राजपुत्रींकौरव्योमहिषींप्रियां॥ गच्छसैरंध्रिमाऽत्रस्था:सुदेष्णायानिवेशनं॥४०॥ भर्त्तारमनुरुंधंत्यक्लिश्यंतेवीरपत्नयः ॥ शुश्रूषयाक्लिश्यमानाः पतिलोकंजयंत्युत॥ ४१ ॥ मन्येनकालंक्रोधस्यपश्यंतिपतयस्तव॥ तेनत्वांनाभिधावंतिगंधर्वाःसूर्यवर्चसः॥ ४२ ॥अकालज्ञासिसैरंध्रिशैलूषीवविरोदिषि॥ विघ्नंकरोषिमत्स्यानांदीव्यतांराजसंसदि॥ ४३ ॥ गच्छसैरंध्रिगंधर्वाःकरिष्यंतितवप्रियं॥ व्यपनेष्यंतितेदुःखंयेनतेविप्रियंकृतं॥ ४४ ॥ सैरंध्र्युवाच अतीवतेषांघृणिनामर्थेहंधर्मचारिणी॥ तस्यतस्यैवतेवध्यायेषांज्येष्ठोक्षदेविता ॥ ४५ ॥ वैशंपायनउवाच इत्युक्त्वाप्राद्रवत्कृष्णासुदेष्णायानिवेशनं॥ केशान्मुक्त्वाचसुश्रोणीसंरंभाल्लोहितेक्षणा॥ ४६॥ शुशुभेवदनंतस्यारुदंत्या:सुचिरंतदा॥ मेघलेखाविनिर्मुक्तंदिवीवशशिमंडलं॥ ४७ ॥ सुदेष्णोवाच कस्त्वावधीद्वरारोहेकस्माद्रोदिषिशोभने॥ कस्याद्यनसुखंभद्रेकेनतेविप्रियंकृतं॥ ४८॥ द्रौपद्युवाच कीचकोमावधीत्तत्रसुराहारींगतांतव॥ सभायांपश्यतोराज्ञो यथैवविजनेवने॥ ४९॥ सुदेष्णोवाच घातयामिसुकेशांतिकीचकंयदिमन्यसे॥ योसौत्वांकामसंमत्तोदुर्लभामवमन्यते॥ ५०॥ सैरंध्र्युवाच अन्येचैनंवधिष्यंतियेषामागःकरोतिसः॥मन्येचैवाद्यसुव्यक्तंयमलोकंगमिष्यति॥५१॥ ॥७॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधप० द्रौपदीपरिभवेषोडशोध्यायः॥ १६॥ वैशंपायनउवाच साहतासूतपुत्रेणराजपत्नीयशस्विनी॥ वधंकृष्णापरीप्संतीसेनावाहस्यभामिनी॥ १ ॥ जगामावासमेवाथसातदाद्रुपदात्मजा॥ कृत्वाशौचंयथान्यायंकृष्णासातनुमध्यमा॥ २ ॥ गात्राणिवाससीचैवप्रक्षाल्यसलिलेनसा ॥ चिंतयामासरुदतीतस्यदुःखस्यनिर्णयं॥ ३ ॥ किंकरोमिक्वगच्छामिकथंकार्यंभवेन्मम॥ इत्येवंचिंतयित्वासाभीमंवैमनसागमत् ॥ ४॥ नान्यःकर्त्ताऋतेभीमान्ममाद्यमनसःप्रियं ॥ ततउत्थायरात्रौसा विहायशयनंस्वकं॥ ५॥ प्राद्रवन्नाथमिच्छंतीकृष्णानाथवतीसती॥भवनंभीमसेनस्यक्षिप्रमायतलोचना॥ ६॥ दुःखेनमहतायुक्तामानसेनमनस्विनी॥ सैरंध्र्युवाच तस्मिन्जीवतिपापिष्ठेसेनावाहेममद्विषि ॥ ७ ॥ तत्कर्मकृतवानद्यकथंनिद्रांनिषेवसे॥ वैशंपायनउवाच एवमुक्त्वाथतांशालांप्रविवेशमनस्विनी॥ ८॥

स्यसेनापतेःकीचकस्य ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ यःतत्कर्मपदाहतिरूपंकृतवान् तस्मिन्जीवति ॥ ७ ॥ ८ ॥

॥ ९ ॥ संमूर्छितेवर्द्धिशोभारूपांप्रामेवप्रजज्वालअशोभत ॥ १० ॥ सर्वश्वेतेवेति पांचालीद्रौपदीवरर्षभंवरणीयंपतिंश्रेष्ठंभीमसेनंउपलक्ष्यवासितेवपुष्पिणीत्वेनकामातुरेवउपातिष्ठतसमीपेस्थितवती ॥ व स्तुतोनकामातुरा किंतुद्वेषातुरैवेतिभावः ॥ तत्रदृष्टांतद्वयं ॥ इवशब्दःकाकाक्षिवदुभयत्रसंबध्यतेसर्वश्वेतेवमाहेयीवचेति ॥ सर्वश्वेनावकीयथाकामातुरावरर्षभंपतिमिति एकः ॥ तस्याःकामातुरत्वेहेतुः ॥ व नेजातेति जलेजाता तेनजलसामीप्येनलब्धाहारत्वेनउन्मत्तत्वंसूच्यते तथामाहेयीगौःसापिवासितासतीवरर्षभंसांडवलीवर्दंतस्याअपिवासितात्वेविशेषणं त्रिहायणीति त्रिवर्षाहिगौर्यौवनारूढाकामातुराच भवति अन्येतु श्वेतःसितेराजहंसेकैलासेद्वीपभूपयोरितिकोशमुदाहृत्यसर्वश्वेताहंसीतिव्याचक्षते तत्रसर्वपदंव्यर्थंहंसस्यलोहितलोचनास्यचरणत्वात्प्रतिकूलंच यद्यपित्रिहायणीत्रिवर्षागौरितिचकोशात्त्रिहा

यस्यांभीमस्तथाशेतेमृगराजइवश्वसन्॥ तस्यारूपेणसाशालाभीमस्यचमहात्मनः॥ ९॥ संमूर्छितेवकौरव्यप्रजज्वालचतेजसा ॥ सावैमहानसंप्राप्यभीम सेनंशुचिस्मिता॥ १०॥ सर्वश्वेतेवमाहेयीवनेजातात्रिहायणी॥ उपातिष्ठतपांचालीवासितेववरर्षभं॥ ११॥ सालतेवमहाशालंफुल्लंगोमतितीरजं॥ परिष्व जत्पांचालीमध्यमंपांडुनंदनं॥ १२॥ बाहुभ्यांपरिरभ्यैनंप्राबोधयदनिंदिता॥ सिंहंसुप्तंवनेदुर्गेमृगराजवधूरिव॥ १३॥ भीमसेनमुपाश्लिष्यद्धस्तिनीवमहा गजं॥ वीणेवमधुरालापागांधारंसाधुमूर्छती॥ अभ्यभाषतपांचालीभीमसेनमनिंदिता॥ १४॥ उत्तिष्ठोत्तिष्ठकिंशेषेभीमसेनयथामृतः॥ नामृतस्यहिपा पीयान्भार्यामालभ्यजीवति॥ १५॥ ससंप्रहायशयनंराजपुत्र्याप्रबोधितः॥ उपातिष्ठतमेघाभःपर्यंकेसोपसंग्रहे॥ १६॥ अथाब्रवीद्राजपुत्रींकौरव्योमहिषीं प्रियां॥ केनास्यर्थेनसंप्राप्तात्वरितेवममांतिकं॥ १७॥ नतेप्रकृतिमान्वर्णः कृशापांडुश्चलक्ष्यसे॥ आचक्ष्वपरिशेषेणसर्वंविद्यामहंयथा॥ १८॥ सुखंवायदि वादुःखंद्वेष्यंवायदिवाऽप्रियं॥यथावत्सर्वमाचक्ष्वश्रुत्वाज्ञास्यामियत्क्षमं॥ १९॥ अहमेवहितेकृष्णेविश्वास्यःसर्वकर्मसु ॥अहमापत्सुचापित्वांमोक्षयामिपु नःपुनः॥ २०॥ शीघ्रमुक्त्वायथाकामंयत्तेकार्यंविवक्षितं॥ गच्छवैशयनायैवपुरानान्येनबुध्यते॥ २१॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधप० द्रौपदी भीमसंवादेसप्तदशोऽध्यायः॥ १७॥ ॥छ॥

यणीपदेनैवगौर्लभ्यतेतथापितत्कामातुरत्वज्ञापनार्थमुपक्षीणंसद्विशेष्यसमर्पकंपदांतरमपेक्षतएवेतिनव्यर्थविशेषणत्वं अन्येव्याख्यानप्रका राःसर्वेऽनेनैवदोषेणप्रस्ताइत्युपेक्षिताः ॥ ११ ॥मध्यमंपांडुनंदनं भीमसेनं यमयोःसहजातत्वेनपौर्वापर्याभावात्तौकनिष्ठावेवयुधिष्ठिरोज्येष्ठएव मध्यमत्वंभीमार्जुनयोरेवविश्रांतंतत्रापिअत्रप्रकरणात्अर्जुन स्यसंप्रतिपुंस्त्वाभावाच्चमध्यमत्वंभीमसेनेएवमुख्यमित्याशयेनैवैतदुक्तं परिष्वजतपर्यष्वजतआलिंगितवती॥ १२॥ १३ ॥ गांधारंस्वरविशेषंमूर्छनीमूर्छयंती ॥ १४॥ १५ ॥ सोपसंग्रहेसतूलिके ॥ १६॥ १७ ॥ प्रियांजानीयां॥ १८ ॥ ज्ञास्यामिउपायंचिंतयिष्यामि क्षमंयोग्यं ॥ १९ ॥ २० ॥ २१ ॥ इतिविराटपर्वणिनैल० भारतभावदीपेसप्तदशोऽध्यायः ॥ १७ ॥

॥ १ ॥सत्भाशालातस्यांपरिषत् जनसमाजःतस्यमध्ये तदाद्यूतकाले ॥ २ ॥ ३ ॥ सैंधवेनजयद्रथेन॥४॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १०॥ प्रव्रज्यंप्रव्रजनं व्रजयजोर्भावेक्यप् तस्मैप्रव्रज्याय ॥ ११ ॥निष्कः
सुवर्णपलंतेषांसहस्रेण ॥ १२ ॥ रुक्मंस्वर्णरूपंहिरण्यं तस्माद्रजतं हिरण्यमश्रुजमितिश्रुतौहिरण्यशब्दस्यरजतेपिदर्शनात् यानंगजादि युग्यंयुगोपेतंरथशकटादि अश्वावडवा ॥ १३ ॥ १४ ॥ १५ ॥

द्रौपद्युवाच अशोच्यत्वंकुतस्तस्यायस्याभर्तायुधिष्ठिरः॥जानन्सर्वाणिदुःखानिकिंमांत्वंपरिपृच्छसि ॥ १ ॥ यन्मांदासीप्रवादेनप्रातिकामीतदानयत्॥ स
भापरिषदोमध्येतन्मांदहतिभारत ॥ २ ॥ पार्थिवस्यसुतानामकानुजीवतिमादृशी ॥ अनुभूयेदृशंदुःखमन्यत्रद्रौपदींप्रभो ॥ ३ ॥ वनवासगतायाश्चसैंधवेनदु
रात्मना॥परामर्शोद्वितीयोवैसोढुमुत्सहतेतुका॥४ ॥मत्स्यराज्ञःसमक्षंतुतस्यधूर्तस्यपश्यतः॥कीचकेनपरामृष्टाकानुजीवतिमादृशी॥ ५॥ एवंबहुविधैःक्लेशैःक्लि
श्यमानांचभारत ॥ नमांजानासिकौंतेयकिंफलंजीवितेनमे ॥ ६ ॥ योयंराज्ञोविराटस्यकीचकोनामभारत ॥ सेनानीःपुरुषव्याघ्रस्यालःपरमदुर्मतिः ॥ ७ ॥
समांसैरंध्रिवेषेणवसंतींराजवेश्मनि ॥ नित्यमेवाहदुष्टात्माभार्यामभवेतिवै ॥ ८ ॥ तेनोपमंत्र्यमाणायावधार्हेणसपत्नहन् ॥ कालेनेवफलंपक्वंहृदयंमेविदीर्य
ते ॥ ९ ॥ भ्रातरंचविगर्हस्वज्येष्ठंदुर्द्यूतदेविनं ॥ यस्यास्मिकर्मणाप्राप्तादुःखमेतदनंतकं ॥ १० ॥ कोहिराज्यंपरित्यज्यसर्वस्वंचात्मनासह॥ प्रव्रज्यायैवदीव्येतवि
नादुर्द्यूतदेविनं ॥ ११ ॥ यदिनिष्कसहस्रेणयच्चान्यत्सारवद्धनं ॥ सायंप्रातरदेविष्यदपिसंवत्सरान्बहून् ॥ १२ ॥ रुक्मंहिरण्यंवासांसियानंयुग्यमजाविकं ॥ अ
श्वाश्वतरसंघाश्चनजातुक्षयमावहेत् ॥ १३ ॥ सोयंद्यूतप्रवादेनश्रियः प्रत्यवरोपितः ॥ तूष्णीमास्तेयथामूढःस्वानिकर्माणिचिंतयन् ॥ १४ ॥ दशनागसहस्रा
णिहयानांहेममालिनां ॥ यंयांतमनुयांतीहसोयंद्यूतेनजीवति ॥ १५ ॥ रथाःशतसहस्राणिनृपाणाममितौजसां ॥ उपासंतमहाराजमिंद्रप्रस्थेयुधिष्ठिरं ॥ १६॥
शतंदासीसहस्राणांयस्यनित्यंमहानसे ॥ पात्रीहस्तादिवारात्रमतिथीन्भोजयंत्युत ॥ १७ ॥ एषनिष्कसहस्राणिप्रदायददतांवरः ॥ द्यूतजेनत्यनर्थेनमहतास
मुपाश्रितः ॥ १८ ॥ एनंहिस्वरसंपन्नाबहवःसूतमागधाः ॥ सायंप्रातरुपातिष्ठन्सुमृष्टमणिकुंडलाः ॥ १९ ॥ सहस्रमृषयोयस्यनित्यमासन्सभासदः ॥ तपःश्रुतो
पसंपन्नाःसर्वकामैरुपस्थिताः ॥ २० ॥ अष्टाशीतिसहस्राणिस्नातकागृहमेधिनः ॥ त्रिंशद्दासीकएकैकोयान्बिभर्त्तियुधिष्ठिरः॥ २१॥ अप्रतिग्राहिणांचैवयती
नामूर्ध्वरेतसां ॥ दशचापिसहस्राणिसोयमास्तेनरेश्वरः ॥ २२ ॥ आनृशंस्यमनुक्रोशंसंविभागस्तथैवच ॥ यस्मिन्नेतानिसर्वाणिसोयमास्तेनरेश्वरः ॥ २३॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ यतीनांदशसहस्राणि बिभर्तीतिपूर्वेणान्वयः ॥ २२ ॥ आनृशंस्यंअनैष्ठुर्यं अनुक्रोशंदयां ॥ २३ ॥

॥ २ ४ ॥ निरयंपारतंत्र्यं कंकोहमितियुधिष्ठिरोब्रूते कंकव्रतयुधिष्ठिरइतिपाठेकंकव्रतश्चासौयुधिष्ठिरश्चेतिसमासः ॥ २ ५ ॥ २ ६ ॥ २ ७ ॥ २ ८ ॥ २ ९ ॥ सदस्यंसभासदं ॥ ३ ० ॥ ३ १ ॥ ३ २ ॥ ३ ३ ॥
इतिविराटपर्वणिनैल० भारतभावदीपेऽष्टादशोऽध्यायः ॥ १ ८ ॥ ॥ १ ॥ हीनेनीचेअसमेविषमे ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ प्रियसंवासात्प्रियस्यभीमसेनस्यसंवासःसहवासः

अंधान्वृद्धांस्तथाऽनाथान्बालान्राष्ट्रेषुदुर्गतान्॥ बिभर्त्तिविविधान्राजाधृतिमान्सत्यविक्रमः॥ संविभागमनानित्यमानृशंस्याद्युधिष्ठिरः॥ २ ४ ॥ सएषनिर
यंप्राप्तोमत्स्यस्यपरिचारकः॥ सभायांदेविताराज्ञःकंकोब्रूतेयुधिष्ठिरः॥ २ ५ ॥ इंद्रप्रस्थेनिवसतःसमयेयस्यपार्थिवाः॥ आसन्बलिभृतःसर्वेसोद्यान्यैर्भृतिमि
च्छति॥ २ ६ ॥ पार्थिवाःपृथिवीपालायस्यासन्वशवर्त्तिनः॥ सवशेविवशोराजापरेषामद्यवर्त्तते॥ २ ७॥ प्रताप्यपृथिवींसर्वांरश्मिमानिवतेजसा॥ सोयंराज्ञो
विराटस्यसभास्तारोयुधिष्ठिरः॥ २ ८ ॥ यमुपासंतराजानःसभायामृषिभिःसह ॥ तमुपासीनमद्यान्यंपश्यपांडवपांडवं ॥ २ ९ ॥ सदस्यंसमुपासीनंपरस्यप्रि
यवादिनं ॥ दृष्ट्वायुधिष्ठिरंकोपोवर्द्धतेमामसंशयं ॥ ३ ० ॥ अतदर्हंमहाप्राज्ञंजीवितार्थेभिसंस्थितं ॥ दृष्ट्वाकस्यनदुःखंस्याद्धर्मात्मानंयुधिष्ठिरं ॥ ३ १ ॥ उपा
स्तेस्मसभायांयंकृत्स्नावीरवसुंधरा॥ तमुपासीनमप्यन्यंपश्यभारतभारतं ॥ ३ २ ॥ एवंबहुविधैर्दुःखैःपीड्यमानामनाथवत्॥ शोकसागरमध्यस्थांकिंमांभी
मनपश्यसि ॥ ३ ३ ॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीभीमसंवादेअष्टादशोऽध्यायः ॥ १ ८ ॥ ॥ छ ॥ ॥ छ ॥ द्रौपद्युवाच
इदंतुतेमहद्दुःखंयत्प्रवक्ष्यामिभारत॥ नमेभ्यसूयाकर्त्तव्यादुःखादेतद्ब्रवीम्यहं॥ १ ॥ सूदकर्मणिहीनेत्वमसमेभरतर्षभ ॥ ब्रुवन्वल्लवजातीयःकस्यशोकंनवर्द्धयेः
॥ २ ॥ सूपकारंविराटस्यबल्लवंत्वांविदुर्जनाः॥ प्रेष्यत्वंसमनुप्राप्तंततोदुःखतरंनुकिं ॥ ३ ॥ यदामहानसेसिद्धेविराटमुपतिष्ठसि ॥ ब्रुवाणोवल्लवःसूदस्तदा
सीदतिमेमनः ॥ ४ ॥ यदाप्रहृष्टःसम्राट्त्वांसंयोधयतिकुंजरैः ॥ हसंत्यंतःपुरेनार्योममतूद्विजतेमनः ॥ ५ ॥ शार्दूलैर्महिषैःसिंहैरागारेयोध्यसेयदा ॥ कैके
य्याःप्रेक्षमाणायास्तदामेकश्मलंभवेत् ॥ ६ ॥ ततउत्थायकैकेयीसर्वास्ताःप्रत्यभाषत॥ प्रेष्याःसमुत्थिताश्चापिकैकेयींताःस्त्रियोऽब्रुवन् ॥ ७॥ प्रेक्ष्यमामनव
द्यांगींकश्मलोपहतामिव॥ स्नेहात्संवासजाद्धर्मात्सूदमेषाशुचिस्मिता ॥ ८ ॥ योध्यमानंमहावीर्यमियंसमनुशोचति ॥ कल्याणरूपासैरंध्रीबल्लवश्चापिसुंद
रः॥ ९॥ स्त्रीणांचित्तंचदुर्ज्ञेयंयुक्तरूपौचमेमतौ ॥ सैरंध्रीप्रियसंवासान्नित्यंकरुणवादिनी॥ १ ०॥ अस्मिन्राजकुलेचेमौतुल्यकालनिवासिनौ॥ इतिब्रुवाणा
वाक्यानिसामांनित्यमतर्जयत्॥ १ १॥

संबंधस्तस्मात् तस्मिन्हस्त्यादिभिःसहयोध्यमानेप्रतिकरुणवादिनीदीनवादिनीभवति ॥ १ ०॥ संवासमेवाह अस्मिन्निति॥ १ १॥

॥ १२ ॥ निरयंदुःखं ॥ १३ ॥ १४ ॥ १५ ॥ लोकेपरिभूतेननिंदितेन ॥ १६ ॥ शंखपरिपूर्णाभ्यांबाहुभ्यां ॥ १७ ॥ १८ ॥ १९ ॥२०॥ २१॥ स्प्रष्टुंआकलयितुंयन्निःशेषः यस्येत्यपिपठंति अप्र

कुध्यंतींमांचसंप्रेक्ष्यसमशंकतमांत्वयि॥ तस्यांतथाब्रुवत्यांतुदुःखंमांमहदाविशत्॥१२॥ त्वय्येवंनिरयंप्राप्तेभीमेभीमपराक्रमे॥शोकेयौधिष्ठिरेमग्नानाहंजी
वितुमुत्सहे ॥ १३ ॥ यःसदेवान्मनुष्यांश्चसर्वांश्चैकरथोजयत् ॥ सोयंराज्ञोविराटस्यकन्यानांनर्त्तकोयुवा ॥ १४ ॥ योतर्पयदमेयात्माखांडवेजातवेदसं ॥
सोंतःपुरगतःपार्थकूपेग्निरिवसंवृतः ॥ १५ ॥ यस्माद्भयममित्राणांसदैवपुरुषर्षभात्॥ सलोकपरिभूतेनवेषेणास्तेधनंजयः ॥१६॥ यस्यज्याक्षेपकठिनौबाहू
परिघसन्निभौ॥ सशंखपरिपूर्णाभ्यांशोचन्नास्तेधनंजयः ॥ १७॥ यस्यज्यातलनिर्घोषात्समकंपंतशात्रवः ॥ स्त्रियोगीतस्वनंतस्यमुदिताःपर्युपासते॥ १८॥
किरीटंसूर्यसंकाशंयस्यमूर्द्धन्यशोभत॥ वेणीविकृतकेशांतःसोयमद्यधनंजयः ॥ १९ ॥ तंवेणीकृतकेशांतंभीमधन्वानमर्जुनं ॥ कन्यापरिवृतंदृष्ट्वाभीमसीद
तिमेमनः ॥ २० ॥ यस्मिन्नस्त्राणिदिव्यानिसमस्तानिमहात्मनि॥ आधारःसर्वविद्यानांसधारयतिकुंडले॥ २१ ॥ स्प्रष्टुंराजसहस्राणितेजसाऽप्रतिमानिवै॥
समरेनाभ्यवर्ततवेलामिवमहार्णवः॥ २२ ॥ सोयंराज्ञोविराटस्यकन्यानांनर्तकोयुवा ॥ आस्तेवेषप्रतिच्छन्नःकन्यानांपरिचारकः॥ २३ ॥ यस्यस्मरथघोषे
णसमकंपतमेदिनी॥ सपर्वतवनाभीमसहस्थावरजंगमा॥ २४॥यस्मिन्जातेमहाभागेकुंत्याःशोकोव्यनश्यत॥सशोचयतिमामद्यभीमसेनतवानुजः॥२५॥
भूषितंतमलंकारैःकुंडलैःपरिहाटकैः॥ कंबुपाणिनमायांतंदृष्ट्वासीदतिमेमनः॥ २६॥ यस्यनास्तिसमोवीर्येकश्चिदुर्व्यांधनुर्धरः ॥सोद्यकन्यापरिवृतोगायन्ना
स्तेधनंजयः॥ २७॥ धर्मेशौर्येचसत्येचजीवलोकस्यसंमतं ॥स्त्रीवेषविकृतंपार्थंदृष्ट्वासीदतिमेमनः॥ २८॥ यदाह्येनंपरिवृतंकन्याभिर्देवरूपिणं॥प्रभिन्नमिव
मातंगंपरिकीर्णंकरेणुभिः॥२९॥ मत्स्यमर्थपतिंपार्थंविराटंसमुपस्थितं॥ पश्यामितूर्यमध्यस्थंदिशोनश्यंतिमेतदा॥३०॥नूनमार्यानजानातिकृच्छ्रंप्राप्तंधनं
जयं॥ अजातशत्रुंकौरव्यंमग्नंदुर्द्यूतदेविनं॥ ३१ ॥ तथादृष्ट्वायवीयांसंसहदेवंगवांपतिं॥गोषुगोवेषमायांतंपांडुभूतास्मिभारत ॥३२॥ सहदेवस्यवृत्तानि
चिंतयंतीपुनःपुनः॥ ननिद्रामभिगच्छामिभीमसेनकुतोरतिं॥३३॥नविंदामिमहाबाहोसहदेवस्यदुष्कृतं॥यस्मिन्नेवंविधंदुःखंप्राप्नुयात्सत्यविक्रमः॥ ३४॥
दूयामिभरतश्रेष्ठदृष्ट्वातेभ्रातरंप्रियं॥ गोषुगोवृषसंकाशंमत्स्येनाभिनिवेशितं॥ ३५॥

तिमानीतिच्छेदः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥
॥२९॥ दिशोनश्यंति शोकेनआंध्यमायातीत्यर्थः ॥ ३० ॥ आर्याश्वश्रूः ॥ ३१ ॥ गोवेषंमहोक्षसदृशं ॥ ३२ ॥ ३३ ॥ ३४ ॥दूयामिखेदंप्राप्नोमि ॥ ३५ ॥

रक्तनेपथ्यं रक्तंगैरिकादिधातुमयंनेपथ्यमलंकारोयस्यतं ॥ ३६ ॥ ३७ ॥ ३८ ॥ ज्येष्ठापचायिनंज्येष्ठपूजकं ॥ ३९ ॥ ४० ॥ वत्सचर्मणिक्षपायांशेतेइतितंवत्सचर्मक्षपाशयं ॥ ४१ ॥ ४२ ॥ अभ्य
कीर्यंतव्यशीर्यंत वृंदानि शत्रूणामितिशेषः ॥ दामग्रंथिग्रंथिकं ॥ ४३ एनंनकुलं वाजिनोऽश्वान्दर्शयंतं विराटंविराटाय ॥ ४४ ॥ ४५ ॥ ४६ ॥ ध्रियमाणेषुजीवत्सु ॥ ४७ ॥ इतिविराटपर्वणिनैलकं

संरब्धंरक्तनेपथ्यंगोपालानांपुरोगमं ॥ विराटमभिनंदंतमथमेभवतिज्वरः ॥ ३६ ॥ सहदेवंहिमेवीरंनित्यमार्याप्रशंसति ॥ महाभिजनसंपन्नःशीलवान्वृत्त
वानिति ॥ ३७॥ ह्रीनिषेवोमधुरवाक्धार्मिकश्चप्रियश्चमे ॥ सतेरण्येषुवोढव्योयाज्ञसेनिक्षपास्वपि ॥ ३८ ॥ सुकुमारश्चशूरश्चराजानंचाप्यनुव्रतः ॥ ज्येष्ठाप
चायिनंवीरंस्वयंपांचालिभोजये॥ ३९॥इत्युवाचहिमांकुंतीरुदतीपुत्रगृद्धिनी ॥ प्रव्रजंतंमहारण्यंतंपरिष्वज्यतिष्ठती ॥ ४० ॥ तंदृष्ट्वाव्यापृतंगोषुवत्सचर्मक्षपा
शयं ॥ सहदेवंयुधांश्रेष्ठंकिन्नुजीवामिपांडव ॥४१॥ यस्त्रिभिर्नित्यसंपन्नोरूपेणास्त्रेणमेधया॥ सोश्वबंधोविराटस्यपश्यकालस्यपर्ययं ॥४२॥अभ्यकीर्यंतवृंदा
निदामग्रंथिमुदीक्ष्यतं ॥ विनयंतंजवेनाश्वान्महाराजस्यपश्यतः ॥ ४३॥ अपश्यमेनंश्रीमंतंमत्स्यंभ्राजिष्णुमुत्तमं॥ विराटमुपतिष्ठंतंदर्शयंतंचवाजिनः॥४४॥
किंनुमांमन्यसेपार्थसुखिनीतिपरंतप ॥ एवंदुःखशताविष्टायुधिष्ठिरनिमित्ततः ॥ ४५ ॥ अतःप्रतिविशिष्टानिदुःखान्यन्यानिभारत ॥ वर्ततेमयिकौंतेयवक्ष्या
मिशृणुतान्यपि ॥ ४६ ॥ युष्मासुध्रियमाणेषुदुःखानिविविधान्युत ॥ शोषयंतिशरीरंमेकिंनुदुःखमतःपरं ॥ ४७॥ इ० म० भा० विराटप० कीचकवधप० द्रौप
दीभीमसंवादेएकोनविंशोऽध्यायः॥ १९ ॥ द्रौपद्युवाच अहंसैरंध्रिवेषेणचरंतीराजवेश्मनि ॥ शौचदास्मिसुदेष्णायाअक्षधूर्तस्यकारणात् ॥१ ॥ विक्रियांप
श्यमेतीव्रांराजपुत्र्याःपरंतप ॥ आत्मकालमुदीक्षंतिसर्वेदुःखंकिलांतवत् ॥ २ ॥ अनित्याकिलमर्त्यानामर्थसिद्धिर्जयाजयौ ॥ इतिकृत्वाप्रतीक्षामिभर्तॄणामु
दयंपुनः ॥ ३॥ चक्रवत्परिवर्ततेह्यर्थाश्चव्यसनानिच ॥ इतिकृत्वाप्रतीक्षामिभर्तॄणामुदयंपुनः ॥ ४ ॥ यएवहेतुर्भवतिपुरुषस्यजयावहः ॥ पराजयेचहेतुश्चसइ
तिप्रतिपालये ॥ किंमांनप्रतिजानीषेभीमसेनमृतामिव ॥ ५॥ दत्वायाचंतिपुरुषाहत्वावध्यंतिचापरे ॥ पातयित्वाचपात्यंतेपरैरितिचमेश्रुतं ॥ ६ ॥

ठीयेभारतभावदीपेएकोनविंशोऽध्यायः १९ ॥ ७॥ सैरंध्र्यावेषेणसैरंध्रीवेषेण शौचदामृज्जलादिशौचसाधनप्रदा ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पुरुषस्यदुर्योधनादेः यःकालः सएवकालएवं प्रति
पालये कालमितिशेषः ॥ ५ ॥ कालएवसर्वंविपरीतंकरोतीत्याह दत्वेति येस्वयंदातारस्तएवकालेनदरिद्राःसंतोयाचकाभवंतीत्यर्थः तथाअन्यान्हत्वापरैरपिवध्यंतिवध्यंते पातयित्वाअन्यान्तएवान्यैः
पात्यंतइति ॥ ६ ॥

अतिभारोदुष्करंदैवस्यकिमपिनास्ति ॥ अस्यदैवस्यअतिवर्त्तनंअतिक्रमणंचनास्ति केनचित्कृतमितिशेषः दैवस्यप्राधान्यप्रतिपादकमागमंप्रतिपालयेमानये दैवाधीनास्मीतिमत्वानशोचामीत्यर्थः ॥ ७ ॥ स्थितमिति यथारिक्तंसरःपुनःकालेनपूर्यतएवंअहमपिपुनःश्रियंप्राप्स्याम्येवेतिनिश्चयेनपर्यायंकालवैपरीत्यंइच्छंती ॥ ८ ॥ यस्यपुंसोर्थोदैवेनविपद्यतेनश्यतितेनदैवस्यैवआगमेआनुकूल्येयत्नःकार्यः दैवान्नष्टोर्थःपुनर्जपहोमादिनाआहर्त्तव्यइत्यर्थः ॥ ९ ॥ १० ॥ ११॥ कुरूनिति ममसंबंधीमन्निमित्तकःकचग्रहादिःअयंक्लेशःपांडवेयान्पांडोःस्त्रीपांडवीकुंतीतस्याःपुत्रान्युष्मान्प्राप्तः सन्कुरून्भीष्मादीन्पांचालान्द्रुपदादींश्चपरिभवेत्नाशयेदित्यर्थः ॥ १२ ॥ समुदितासम्यगुदयवत्यपिएवंकान्याद्दुःखिताभवेन्नकापि श्रीमतामापदोनदृष्टाएवममतुदृष्टाइतिमहदाश्चर्यमितिभावः ॥ १३ ॥ बालयानतुप्रौढया तंबाल्येकृतमपराधंनस्मरामि यस्यप्रसादादिदंदुर्नीतंदुरवस्थांप्राप्तास्मि ॥१४॥ वर्णावकाशोदीप्तिसंकोचः वन्यान्नवल्कलधारणयुक्तात्स्वातंत्र्याद्दिव्यान्नवस्त्रसंयुक्तंपारतंत्र्यमतिदुःखदमितिभावः तत्रवने इदानींयथादीप्तिसंकोचोस्तिनतथावनेआसीदित्यर्थः ॥ १५ ॥ अवशापराधीना ॥ १६ ॥ अदैन्विकंन किंतुदैविकमेव ॥ १७ ॥ विनिपातंपराभवं ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

नदैवस्यातिभारोस्तिनचैवास्यातिवर्त्तनं ॥ इतिचाप्यागमंभूयोदैवस्यप्रतिपालये ॥ ७ ॥ स्थितंपूर्वंजलंयत्रपुनस्तत्रैवगच्छति ॥ इतिपर्यायमिच्छंतीप्रतीक्षे उदयंपुनः ॥ ८ ॥ दैवेनकिलयस्यार्थःसुनीतोपिविपद्यते ॥ दैवस्यचागमेयत्नस्तेनकार्योविजानता ॥ ९ ॥ यत्तुमेवचनस्यास्यकथितस्यप्रयोजनं ॥ पृच्छमांदुःखितांतत्त्वंपृष्टाचात्रब्रवीमिते ॥ १० ॥ महिषीपांडुपुत्राणांदुहिताद्रुपदस्यच ॥ इमामवस्थांसंप्राप्तामदन्याकाजिजीविषेत् ॥ ११ ॥ कुरून्परिभवेत्सर्वान्पांचालानपिभारत ॥ पांडवेयांश्चसंप्राप्तोममक्लेशोत्यरिंदम ॥ १२ ॥ भ्रातृभिःश्वशुरैःपुत्रैर्बहुभिःपरिवारिता ॥ एवंसमुदितानारीकात्वन्यादुःखिताभवेत् ॥ १३ ॥ नूनंहिबालयाधातुर्मयावैविप्रियंकृतं ॥ यस्यप्रसादाद्दुर्नीतंप्राप्तास्मिभरतर्षभ ॥ १४ ॥ वर्णावकाशमपिमेपश्यपांडवयादृशं ॥ तादृशोमेनतत्रासीद्दुःखेपरमकेतदा ॥ १५ ॥ त्वमेवभीमजानीषेयन्मेपार्थसुखंपुरा ॥ साहंदासीत्वमापन्नानशांतिमवशालभे ॥ १६ ॥ नादैविकमहंमन्येयत्रपार्थोधनंजयः ॥ भीमधन्वामहाबाहुरास्तेछन्नइवानलः ॥ १७ ॥ अशक्यावेदितुंपार्थप्राणिनांवैगतिर्नरैः ॥ विनिपातमिमंमन्येयुष्माकंत्वविचिंतितं ॥ १८ ॥ यस्याममसुखप्रेक्षायूयमिंद्रसमाःसदा ॥ साप्रेक्षेमुखमन्यासामवराणांवरासती ॥ १९ ॥ पश्यपांडवमेऽवस्थांयथानार्हामिवैतथा ॥ युष्मासुध्रियमाणेषुपश्यकालस्यपर्ययं ॥ २० ॥ यस्याःसागरपर्यंतापृथिवीवशवर्तिनी ॥ आसीत्साद्यसुदेष्णायाभीताहंवशवर्त्तिनी ॥ २१ ॥ यस्याःपुरःसराआसन्पृष्ठतश्चानुगामिनः ॥ साहमद्यसुदेष्णायाःपुरःपश्चाच्चगामिनी ॥ २२ ॥ इदंतुदुःखंकौंतेयममासह्यंनिबोधतत् ॥ यानजातुस्वयंपिंषेगात्रोद्वर्त्तनमात्मनः ॥ अन्यत्रकुंत्याभद्रंतेसापिनष्म्यद्यचंदनं ॥ २३ ॥

पुराकिणवंतौनैवाभूतांकिंत्विदानीमेवजातावित्यर्थः॥ २४ ॥ २५ ॥ वर्णकोविलेपनं वर्णकश्चारणेस्त्रीतुचंदनेचविलेपनेइतिमेदिनी वर्णकोस्त्रीविलेपनमित्यमरः ॥ २६ ॥ २७ ॥ बाष्पकलयाबाष्पेणगद्गदयामंजुलयावा घट्टयंतीकंपयंतीव ॥ २८ ॥ कर्त्तव्येमर्त्तव्ये कृ हिंसायामित्यस्यरूपं॥ २९ ॥ ३० ॥ ३१ ॥ ॥ इतिविराटपर्वणिनैल० भारतभावदीपेविंशोध्यायः ॥ २० ॥ ६५ ॥ ॥ १ ॥ सभाया

पश्यकौंतेयपाणीमेनैवाभूतांहियौपुरा॥ इत्यस्यदर्शयामासकिणवंतौकरावुभौ॥ २४॥ बिभेमिकुंत्यायानाहंयुष्माकंवाकदाचन ॥ साग्रातोविराटस्यभीतातिष्ठामिकिंकरी॥ २५॥ किंनुवक्ष्यतिसम्राण्मांवर्णकःसुकृतोनवा॥ नान्यपिष्टंहिमत्स्यस्यचंदनंकिलरोचते॥ २६॥ वैशंपायनउवाच साकीर्त्तयंतीदुःखानिभीमसेनस्यभामिनी ॥ रुरोदशनकैःकृष्णाभीमसेनमुदीक्षती ॥ २७ ॥ सावाष्पकलयावाचानिःश्वसंतीपुनःपुनः ॥ हृदयंभीमसेनस्यघट्टयंतीदमब्रवीत् ॥ २८ ॥ नाल्पंकृतंमयाभीमदेवानांकिल्बिषंपुरा ॥ अभाग्यायत्रजीवामिकर्त्तव्येसतिपांडव ॥ २९ ॥ वैशंपायनउवाच ततस्तस्याःकरौसूक्ष्मौकिणबद्धौवृकोदरः॥मुखमानीयवैपत्न्यारुरोदपरवीरहा॥ ३०॥ तौगृहीत्वाचकौंतेयोबाष्पमुत्सृज्यवीर्यवान्॥ततःपरमदुःखार्त्तइदंवचनमब्रवीत्॥ ३१॥ इतिश्रीमहाभारतेविराटपर्वणिकीचकवधपर्वणिद्रौपदीभीमसंवादेविंशोऽध्यायः॥ २० ॥ ॥ ६५ ॥ ॥ भीमसेनउवाच धिगस्तुमेबाहुबलंगांडीवंफाल्गुनस्यच॥ यत्तेरक्तौपुराभूत्वापाणीकृतकिणाविमौ॥ १॥ सभायांतुविराटस्यकरोमिकदनंमहत्॥ तत्रमेकारणंभातिकौंतेयोयत्प्रतीक्षते॥ २॥ अथवाकीचकस्याहंपोथयामिपदाशिरः ॥ ऐश्वर्यमदमत्तस्यक्रीडन्निवमहाद्विपः॥ ३॥ अपश्यंत्वांयदाकृष्णेकीचकेनपदाहतां॥ तदैवाहंचिकीर्षामिमत्स्यानांकदनंमहत् ॥ ४ ॥ तत्रमांधर्मराजस्तुकटाक्षेणन्यवारयत् ॥ तदहंतस्यविज्ञायस्थितएवास्मिभामिनि ॥ ५ ॥ यच्चराष्ट्रात्प्रच्यवनंकुरूणामवधश्चयः ॥ सुयोधनस्यकर्णस्यशकुनेःसौबलस्यच॥ ६॥ दुःशासनस्यपापस्ययन्मयानाहृतंशिरः॥ तन्मेदहतिगात्राणिहृदिशल्यमिवार्पितं ॥ माधर्मंजहिसुश्रोणिक्रोधंजहिमहामते ॥ ७ ॥ इमंतुसमुपालंभंत्वत्तोराजायुधिष्ठिरः॥ शृणुयाद्यदिकल्याणिकृत्स्नंजत्यात्सजीवितं॥ ८ ॥ धनंजयोवासुश्रोणियमौवातनुमध्यमे॥ लोकांतरगतेष्वेषुनाहंशक्ष्यामिजीवितुं॥ ९॥ पुरासुकन्याभार्याचभार्गवंच्यवनंवने॥ वल्मीकभूतंशाम्यंतमन्वपद्यतभामिनी ॥ १० ॥ नारायणीचेंद्रसेनारूपेणयदितेश्रुता॥ पतिमन्वचरद्वृद्धंपुरावर्षसहस्रिणं॥ ११॥

मिति कारणंप्राकट्यंमांभूदितिहेतुः प्रतीक्षतेतदेवसूचयन्मामवेक्षतेअन्यथातदानीमेवकदनंकरोमिकृतंस्यादित्यर्थः ॥ २ ॥ पोथयामिचूर्णीकरोमि ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ नाहृतंछित्वानानीतं ॥ ७ ॥ ८ ॥ ९ ॥ अन्वपद्यतअनुसृतवती॥ १० ॥ ११॥

आगच्छन्नस्पृशन्न्‌ सृक्किणीगल्लयोरभ्यंतरेपरिसंलिहन्‌जिह्वयापरामृशन्‌ ॥ ५१ ॥ इतिविराटपर्वणिनैलकंठीयेभारतभावदीपेएकविंशोऽध्यायः ॥ २१ ॥ ७॥ १ ॥प्रदोषेरजनीमुखे संगतंसंभाषणं निर्धूय

प्रमृज्यवदनंतस्याःपाणिनाश्रुसमाकुलं॥ कीचकंमनसागच्छत्सृक्किणीपरिसंलिहन्‌॥ उवाचचैनांदुःखार्तांभीमःक्रोधसमन्वितः ॥ ५१ ॥ ॥इतिश्रीमहाभारतेविराटपर्वणिकीचकवधप० द्रौपदीसांत्वनेएकविंशोध्यायः ॥ २१ ॥ ७॥ भीमसेनउवाच तथाभद्रेकरिष्यामियथात्वंभीरुभाषसे॥ अद्यतंसूदयिष्यामिकीचकंसहबांधवं॥ १ ॥ अस्याःप्रदोषेशर्वर्याःकुरुष्वानेनसंगतं॥ दुःखंशोकंचनिर्धूययाज्ञसेनिशुचिस्मिते ॥ २ ॥ यैषानर्तनशालेहमत्स्यराजेनकारिता॥ दिवात्रकन्यानृत्यंतिरात्रौयांतियथागृहं॥ ३ ॥ तत्रास्तिशयनंदिव्यंदृढांगंसुप्रतिष्ठितं ॥ तत्रास्यदर्शयिष्यामिपूर्वप्रेतान्पितामहान्‌ ॥ ४ ॥ यथाचत्वांनपश्येयुःकुर्वाणांतेनसंविदं॥ कुर्यास्तथात्वंकल्याणियथासन्निहितोभवेत्‌॥ ५॥ वैशंपायनउवाच तथातौकथयित्वातुबाष्पमुत्सृज्यदुःखितौ॥ रात्रिशेषंतमत्युग्रंधारयामासतुर्हृदि॥ ६॥ तस्यांरात्र्यांव्यतीतायांप्रातरुत्थायकीचकः॥ गत्वाराजकुलायैवद्रौपदीमिदमब्रवीत्‌॥ ७॥सभायांपश्यतोराज्ञःपातयित्वापदाऽहनं॥ नचैवालभसेत्राणमभिपन्नाबलीयसा॥ ८॥ प्रवादेनेहमत्स्यानांराजानाम्नायमुच्यते॥ अहमेवहिमत्स्यानांराजावैवाहिनीपतिः॥ ९ ॥मांसुखंप्रतिपद्यस्वदासोभीरुभवामिते॥ अन्हायतवसुश्रोणिशतंनिष्कान्ददाम्यहं॥ १० ॥ दासीशतंचतेदद्यांदासानामपिचापरं ॥ रथंचाश्वतरीयुक्तमस्तुनौभीरुसंगमः ॥ ॥ ११ ॥द्रौपद्युवाच एवंमेसमयंत्वद्यप्रतिपद्यस्वकीचक॥ नत्वांसखावाभ्रातावाजानीयात्संगतंमया ॥ १२॥ अनुप्रवादाद्भीतास्मिगंधर्वाणांयशस्विनां॥एवंमेप्रतिजानीहिततोहंवशगातव॥ १३॥कीचकउवाच एवमेतत्करिष्यामियथासुश्रोणिभाषसे॥एकोभद्रेगमिष्यामिशून्यमावसथंतव॥ १४॥ समागमार्थंरंभोरुत्वयामदनमोहितः ॥ यथात्वांनैवपश्येयुर्गंधर्वाःसूर्यवर्चसः॥ १५॥ द्रौपद्युवाच यदेतन्नर्तनागारंमत्स्यराजेनकारितं ॥ दिवात्रकन्यानृत्यंतिरात्रौयांतियथागृहं ॥ १६॥ तमिस्रेतत्रगच्छेथागंधर्वास्तन्नजानते॥ तत्रदोषःपरिहृतोभविष्यतिनसंशयः॥ १७॥ वैशंपायनउवाच तमर्थमपिजल्पंत्याःकृष्णायाःकीचकेनह ॥ दिवसार्द्धंसमभवन्मासेनैवसमंनृप॥ १८॥ कीचकोथगृहंगत्वाभृशंहर्षपरिप्लुतः॥ सैरंध्रीरूपिणंमूढोमृत्युंतन्नावबुद्धवान्‌१९॥

अप्रकाश्य ॥ २ ॥ ३ ॥ दृढांगंकाष्ठफलकमयं ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ अहनंहतवान्‌ ॥ ८ ॥ ९ ॥ १० ॥ नौआवयोः ॥ ११ ॥ समयंसंकेतंप्रतिपद्यस्वस्वीकुरु ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ ॥ १६ ॥ १७ ॥ दिवसार्द्धंअहोरात्रार्द्धंदिनंएकमपिमासेनसमंऔत्कंठ्यादभूत्‌ ॥१८॥१९॥

॥२०॥२१॥२२॥ कृतसंप्रत्ययःकृतविश्वासःनाजानात्नज्ञातवान्॥२३॥ २४ ॥२५॥ २६ ॥२७॥ ह्रदात्यमुनाह्रदात् नागंकालियंकृष्णोयथाउद्धृतवान्तद्वत्त्वमेन मिहलोकाद्दूरेपातयेतिभाव:॥२८॥२९॥

गंधाभरणमाल्येषुव्यासक्तःसविशेषतः॥ अलंचक्रेतदात्मानंसत्वरःकाममोहितः॥२०॥तस्यतत्कुर्वतःकर्मकालोदीर्घइवाभवत्॥ अनुचिंतयतश्चापितामेवा
यतलोचनां ॥ २१ ॥ आसीदभ्यधिकाचापिश्रीःश्रियंप्रमुमुक्षतः॥ निर्वाणकालेदीपस्यवर्तीमिवदिधक्षतः॥ २२ ॥ कृतसंप्रत्ययस्तस्याःकीचकःकाममोहि
तः॥ नाजानाद्दिवसंयांतंचिंतयानःसमागमं ॥ २३ ॥ ततस्तुद्रौपदीगत्वातदाभीमंमहानसे ॥ उपातिष्ठतकल्याणीकौरव्यंपतिमंतिकं ॥ २४॥ तमुवाचसुके
शांताकीचकस्यमयाकृतः॥संगमोनर्तनागारेयथावोचःपरंतप ॥ २५॥ शून्यंसनर्तनागारमागमिष्यतिकीचकः॥ एकोनिशिमहाबाहोकीचकंतंनिषूदय॥
॥२६॥ तंसूतपुत्रंकौंतेयकीचकंमददर्पितं॥ गत्वात्वंनर्तनागारंनिर्जीवंकुरुपांडव ॥ २७॥ दर्पाच्चसूतपुत्रोसौगंधर्वानवमन्यते॥. तंत्वंप्रहरतांश्रेष्ठह्रदान्नाग
मिवोद्धर॥ २८ ॥ अश्रुदुःखाभिभूतायाममार्जस्वभारत ॥ आत्मनश्चैवभद्रंतेकुरुमानंकुलस्यच॥ २९॥ भीमसेनउवाच स्वागतंतेवरारोहेयन्मांवि
दयसेप्रियं॥ नत्वन्यंकंचिदिच्छामिसहायंवरवर्णिनि ॥ ३० ॥ यामेप्रीतिस्त्वयाख्याताकीचकस्यसमागमे॥ हत्वाहिडिंबंसाप्रीतिर्ममासीद्वरवर्णिनि॥३१॥
सत्यंभ्रातॄंश्चधर्मंचपुरस्कृत्यब्रवीमिते॥ कीचकंनिहनिष्यामिवृत्रंदेवपतिर्यथा॥ ३२॥ तंगह्वरेप्रकाशेवापोथयिष्यामिकीचकं ॥ अथचेदपियोत्स्यंतिहिंसेम
त्स्यानपिध्रुवं॥ ३३॥ ततोदुर्योधनंहत्वाप्रतिपत्स्येवसुंधरां॥ कामंमत्स्यमुपास्तांहिकुंतीपुत्रोयुधिष्ठिरः॥ ३४॥ द्रौपद्युवाच यथानसंत्यजेथास्त्वंसत्यंवैम
त्कृतेविभो॥ निगूढस्त्वंतथापार्थकीचकंतंनिषूदय॥ ३५ ॥ भीमसेनउवाच . एवमेतत्करिष्यामियथात्वंभीरुभाषसे ॥ अद्यतंसूदयिष्यामिकीचकंसहबां
धवैः॥ ३६॥ अदृश्यमानस्तस्याथतमस्विन्यामनिंदिते॥ नागोबिल्वमिवाक्रम्यपोथयिष्याम्यहंशिरः ॥ अलभ्यामिच्छतस्तस्यकीचकस्यदुरात्मनः ॥ ३७॥
वैशंपायनउवाच भीमोथप्रथमंगत्वारात्रौछन्नउपाविशत्॥ मृगंहरिरिवादृश्यःप्रत्याकांक्षतकीचकं॥३८॥ कीचकश्चाप्यलंकृत्ययथाकाममुपागमत् ॥
तांवेलांनर्त्तनागारंपांचालीसंगमाशया॥ ३९॥ मन्यमानःससंकेतमागारंप्राविशच्चतत्॥ प्रविश्यचसतद्वेश्मतमसासंवृतंमहत्॥.४० ॥ पूर्वागतंततस्तत्रभी
मम्प्रतिमौजसं॥ एकांतावस्थितंचैनमाससादसदुर्मतिः॥ ४१ ॥ शयानंशयनेतत्रसूतपुत्रःपरामृशत्॥ जाज्वल्यमानंकोपेनकृष्णाधर्षणजेनह ॥ ४२ ॥

२०॥ ३१॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तस्यतेनादृश्यमानः नागोहस्ती अलभ्यांत्वां ॥ ३७ ॥ ३८॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ यत्कृतंयदर्जितंधनादितत्सर्वंतेतुभ्यंप्रापितंदत्तमितिसंबंधः ॥ ४४ ॥ अतःपरंत्वांसमुद्दिश्याहंअत्रागतोस्मि ॥ ४५ ॥ प्रशंसंति त्वयाहंवृतइतिहेतोरित्यभिप्रायः॥ ४६ ॥४७ ॥४८॥ ४९॥ ५० ॥

उपसंगम्यचैवैनंकीचकःकाममोहितः॥ हर्षोन्मथितचित्तात्मास्मयमानोभ्यभाषत ॥ ४३ ॥ प्रापितंतेमयावित्तंबहुरूपमनंतकं॥ यत्कृतंधनरत्नाढ्यंदासीशत
परिच्छदं॥ ४४ ॥ रूपलावण्ययुक्ताभिर्युवतीभिरलंकृतं॥ गृहंचांतःपुरंसुभ्रुक्रीडारतिविराजितं ॥ तत्सर्वंत्वांसमुद्दिश्यसहसाहमुपागतः ॥ ४५ ॥ अकस्मान्मां
प्रशंसंतिसदागृहगताः स्त्रियः॥ सुवासादर्शनीयश्चनान्योस्तित्वादृशःपुमान्॥ ४६ ॥ भीमसेनउवाच दिष्ट्यात्वंदर्शनीयोथदिष्ट्यात्मानंप्रशंससि ॥ ईदृश
स्तुत्वयास्पर्शःस्पृष्टपूर्वोनकर्हिचित्॥ ४७॥ स्पर्शंवेत्सिविदग्धस्त्वंकामधर्मविचक्षणः॥ स्त्रीणांप्रीतिकरोनान्यस्त्वत्समःपुरुषस्त्विह ॥ ४८॥ वैशंपायनउवाच
इत्युक्त्वातंमहाबाहुर्भीमोभीमपराक्रमः॥ सहसोत्पत्यकौंतेयःप्रहस्येदमुवाचह॥ ४९ ॥ अद्यत्वांभगिनीपापंकृष्यमाणंमयाभुवि ॥ द्रक्ष्यतेऽद्रिप्रतीकाशंसिंहे
नेवमहागजं॥ ५० ॥ निराबाधात्वयिहतेसैरंध्रीविचरिष्यति॥ सुखमेवचरिष्यंतिसैरंध्र्याःपतयःसदा॥ ५१ ॥ततोजग्राहकेशेषुमाल्यवत्सुमहाबलः॥सकेशेषुप
रामृष्टोबलेनबलिनांवरः॥ ५२ ॥ आक्षिप्यकेशान्वेगेनबाह्वोर्जग्राहपांडवं॥ बाहुयुद्धंतयोरासीत्क्रुद्धयोर्नरसिंहयोः ॥ ५३ ॥ वसंतेवासिताहेतोर्बलवद्गजयो
रिव ॥ कीचकानांतुमुख्यस्यनराणामुत्तमस्यच॥ ५४ ॥ वालिसुग्रीवयोर्भ्रात्रोःपुरेवकपिसिंहयोः॥ अन्योन्यमपिसंरब्धौपरस्परजयैषिणौ॥ ५५ ॥ ततःस
मुद्यम्यभुजौपंचशीर्षाविवोरगौ॥ नखदंष्ट्राभिरन्योन्यंघ्नतःक्रोधविषोद्धतौ॥ ५६॥ वेगेनाभिहतोभीमःकीचकेनबलीयसा॥ स्थिरप्रतिज्ञःसरणेपदान्नचलि
तःपदं॥ ५७ ॥ तावन्योन्यंसमाश्लिष्यप्रकर्षंतौपरस्परं॥ उभावपिप्रकाशेतेप्रवृद्धौवृषभाविव ॥ ५८ ॥ तयोर्ह्यासीत्सुतुमुलःसंप्रहारःसुदारुणः ॥ नखदं
ष्ट्रायुधवतोर्व्याघ्रयोरिवदृप्तयोः ॥ ५९ ॥ अभिपत्याथबाहुभ्यांप्रत्यगृह्णादमर्षितः॥ मातंगइवमातंगंप्रभिन्नकरटामुखं ॥ ६० ॥ सचाप्येनंतदाभीमःप्रतिज
ग्राहवीर्यवान् ॥ तमाक्षिपत्कीचकोथबलेनबलिनांवरः॥ ६१ ॥ तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा॥ शब्दःसमभवद्घोरोवेणुस्फोटसमोयुधि॥ ६२॥अ
थैनमाक्षिप्यबलाद्गृहमध्येवृकोदरः ॥ धूनयामासवेगेनवायुश्चंडइवद्रुमं॥ ६३ ॥ भीमेनचपरामृष्टोदुर्बलोबलिनारणे॥ प्रास्पंदतयथाप्राणंविचकर्षचपांड
वं ॥ ६४ ॥ ईषदाकलितंचापिक्रोधाद्द्रुतपदंस्थितं ॥ कीचकोबलवान्भीमंजानुभ्यामाक्षिपद्भुवि ॥ ६५ ॥

५१ ॥ ५२ ॥ ५३॥वासिताहेतोर्हस्तिनीनिमित्तं॥५४॥
५५॥५६॥५७॥५८॥५९॥ करटामुखंगंडस्थलस्थंमदनिर्गमस्थानं करटोगजगंडेस्यादितिमेदिनी॥६०॥६१॥६२॥६३॥६४॥आकलितंआक्रांतंद्रुतपदंचलितस्थानंयथास्यात्तथास्थितं॥ ६५ ॥

